शरीरात्मवादिनां चार्वाकाणां मूकः काणो बधिरोऽन्धः पंगुः क्लीब इति च व्यवहारानुरोधादिन्द्रियाणामभावे शारीरव्यवहारायोगादिन्द्रियाण्येवात्मेतीन्द्रियात्मवादिनां चार्वाकाणाम्, 'अन्योन्तर आत्मा मनोमयः' इति ( तै० उ० २ । २ ) श्रुतेः प्राणाभावे इन्द्रियादिव्यापारायोगात्प्राण एवात्मेति प्राणात्मवादिनां चार्वाकाणाम्, 'अन्योन्तर आत्मा मनोमयः' इति ( तै० उ० २ । ३ ) श्रुतेर्विकल्पवृत्तिकस्य मनसोऽभावे ( =सुषुप्तौ मनसि लीने ) सत्स्वपि प्राणेन्द्रियेषु शरीरव्यवहारस्यादर्शनान्मनोनुरोधेनैव सर्वेषामिन्द्रियव्यवहाराणां दर्शनाच्च मन एवात्मेति मन आत्मवादिनां च चार्वाकाणां; तथा 'असदेवेदमग्र आसीद्' इति ( छा० उ० ३।१९।१ ) तथा 'असद्वा इदमग्र आसीद्' इति ( तै० उ० २।७ ) श्रुतिभ्यां सुषुप्तौ सर्वाभावादहं सुप्तः सुषुप्तौ नासमित्युत्थितस्य स्वाभावपरामर्शानुभवाच्च शून्यमेवात्मेति शून्यात्मवादिनां माध्यमिकानां, सौत्रान्तिकानां, वैभाषिकाणां, योगाचाराणां चेत्येवं चतुर्विधानां बुद्धशिष्याणां बुद्धेनैकरूपेणोपदिष्टार्थस्यापि सिद्धान्तस्य स्वस्वमन्दमध्यमोत्तमबुद्ध्यनुसारेण सिद्धान्तार्थस्य भेदेन ग्रहणादेकस्यैव सिद्धान्तस्य बुद्धोपदिष्टस्य कालान्तरे पर्यालोचनया तत्र दोषबुद्ध्या प्रकारान्तरेण ततः कालान्तरे तत्रापि दोषबुद्ध्या ततोपि कालान्तरे प्रकारान्तरेणेत्येवं प्रवृत्तेर्वा सर्वं क्षणिकंक्षणिकं, शून्यंशून्यं, स्वलक्षणंस्वलक्षणं, दुःखंदुःखमित्येवं भेदेन स्वस्वसिद्धान्तप्रवर्तकानां मतानि पर्यालोच्य तन्निरासाय दशसूत्र्या समुदायाधिकरणं ( ब्रह्मसू० २।२।१८–२७ ), तथा पञ्चसूत्र्योपलब्ध्यधिकरणं ( ब्रह्मसू० २।२।२८–३२ ) च, तथा सप्तपदार्थवादिनां–( सप्तभङ्गीवादिनां ) तथा विवसनानां ( दिगम्बराणां जैनानां[1] ) मतस्य निराकरणाय चतुःसूत्र्यैकस्मिन्नसम्भवाधिकरणं–( ब्रह्मसू० २।२।३३–३६ ), तथा पञ्चपदार्थवादिनां तथा वैशेषिकवदीश्वरो निमित्तकारणमिति वादिनां जटाधारिमाहेश्वराणां मतस्य निराकरणाय पञ्चसूत्र्याऽसामञ्जस्याधिकरणं ( ब्रह्मसू० २।२।३७–४१ ), तथा चतुर्व्यूहवादिनां तथेश्वर उपादानकारणं निमित्तकारणं चेति वादिनां वैष्णवानां मतस्य निराकरणाय चतुःसूत्र्योत्पत्त्यसम्भवाधिकरणं–(ब्रह्मसू० २।२ ४२–४५), तथा परमाणूनामेव जगत्कारणत्वमिति वादिभिर्वैशेषिकैर्दीयमानदूषणोद्धारायैकेन सूत्रेण महद्दीर्घाधिकरणं–( ब्रह्मसू० २।२।११ ), तथा परमाणूनामेव जगत्कारणत्वमिति वदतां वैशेषिकाणां मतस्य निराकरणाय सप्तसूत्र्या परमाणुकारणत्वाधिकरणं–( ब्रह्मसू० २।२।१२–१७ ), तथा प्रधानस्यैव जगत्कारणत्वमिति वदतां साङ्ख्यानां मतस्य निराकरणाय सप्तसूत्र्येक्षत्यधिकरणं–( ब्रह्मसू० १ । १।५–११ ), तथानन्दमयाधिकरणे एकं सूत्रं ( ब्रह्मसू० १।१।१८ ), तथा दशसूत्र्या रचनानुपपत्त्यधिकरणं–( ब्रह्मसू० २ । २ । १–१० ) च तथान्यैरपि सूत्रैः आत्मज्ञानं कर्माङ्गमिति वदतो जैमिनेर्मतस्य निरासाय पुरुषार्थाधिकरणे द्वितीयं सूत्रं ( ब्रह्मसू० ३।४।२ ), तथा सर्वे वेदाः कर्मार्था ये तु न कर्मार्थास्तेऽनर्था इति वदतो जैमिनेर्मतस्य तथान्येषां काणादादीनामपि मतस्य निरासायैकेन सूत्रेण समन्वयाधिकरणं–( ब्रह्मसू० १।१।४ ) चेत्येवमास्तिकानां नास्तिकानां च श्रुतिविरुद्धार्थवादिनां श्रुतितत्समन्वयादिकं विहाय स्वेच्छया कल्पितापार्थानामपार्थत्वप्रतिपा-

[1] जैनशब्दार्हतशब्दौ जैनपर्यायौ ( ब्रह्मसू० २।२।३६ ) शांकरभाष्ये निर्दिष्टौ ।

दनद्वारा सिद्धान्तार्थप्रतिपादनाय तात्कालिकापसिद्धान्तप्रचारबाहुल्येन भ्रान्तानामात्मज्ञान-विधुराणामनात्मानमात्मेति मन्यमानानां जीवानां दुर्दशां च पर्यालोच्य तत्राधिकारिणां तेषां हितकाम्ययानुजिघृक्षया वा परमकारुणिको भगवान् ( बदरीवननिवासी=बदरिका-श्रमवासी=) बादरायणापरनामा कृष्णद्वैपायनापरनामा चाऽपान्तरतमा नाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात्कलिद्वापरयोः सन्धावुत्पन्नः ( ब्रह्मसू० ३।३।३२ शां० भा० ) वेदव्यासः श्रुतिवाक्यार्थानामद्वैते ब्रह्मणि समन्वयार्थं समन्वयाध्यायं प्रथमं परस्परं स्मृति-न्यायश्रुतिभिर्द्वैते ब्रह्मणि समन्वयविरोधस्य परिहाराय विरोधपरिहाराध्यायं द्वितीयम्, आत्मसाक्षात्कारप्रयोजकसाधनविचारपरं साधनविचाराध्यायं तृतीयं, फलाध्यायं चतुर्थं च साङ्गोपाङ्गवेदवेदान्तविचित्रपदघटितवाक्यकुसुममालागुम्फनसमर्थं सूत्ररूपेण विरचय्य तेषां श्रुत्यर्थादिगतान्संशयविपर्ययादीनुत्सार्याद्वैतात्मतत्त्वमुपदिदेश । एवं कलौ केषुचित्समयेष्वतीतेषु क्रमेण कलेः प्राबल्यात् लोकानां तपोबलह्रासेन सात्त्विकबुद्धिबलस्यातीव ह्रासेन कामक्रोधलोभमोहमदमात्सर्याख्यादिषड्वर्गस्य प्राबल्यात्तत्सूत्रमात्रावलम्बेन सिद्धान्तार्थनिर्णयासामर्थ्येन वेदान्तानामिव तदर्थनिर्णायकब्रह्मसूत्राणामपि यथावदर्थकरणेनाद्वैतब्रह्मतत्त्वाज्ञानेन चार्वाकस्य,चतुर्णां बौद्धानां जैनानां चेत्येवं षण्णां चार्वाकाणामन्येषां च मतप्रचारस्य प्राबल्येन पुनरपि प्रवृत्त्या दुरूहं 'ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' इति (भगवद्गीता० १३।४१) ब्रह्मसूत्रोद्बुद्धसर्वोपनिषत्तात्पर्यगम्यं निरुपाधिकस्याद्वैतात्मतत्त्वं बोधनीयमिति पुनरपि भरतखण्डस्य बहुनायकत्वेनैकनियामकाभावात्कलौ बौद्धजैनादिनास्तिकमतमोहितान् नास्तिकमतप्रविष्टान् प्रवेष्टुमुद्यतान् वैदिकमार्गनिन्दकान् दानव्रतादिद्वेषिणो जात्यादिविहीनान् वर्णाश्रमधर्मच्युतान् हव्यकव्यायनभिज्ञान् सच्छास्त्र-निन्दकान् असच्छास्त्रप्रवर्तकान् द्विजान् वीक्ष्य तेषां यथावल्लोके वैदिकमार्गप्रचारप्रति-बन्धकापायादिदोषदूरीकरणाय देवादिप्रार्थनया भुवि शङ्करावतारतयावतीर्णेन सर्वज्ञेन श्रीमता शङ्कराचार्येणेशकेनकठप्रश्नमुण्डमाण्डूक्यतैत्तिरीयैतरेयछान्दोग्यबृहदारण्यकाख्यानां दशोपनिषदां ब्रह्मसूत्राणां भगवद्गीतायाश्चेत्येवंरूपस्य प्रस्थानत्रयस्यान्येषां च ग्रन्थानां भाष्याण्यन्यान्यपि मध्यमानल्पांश्च वेदान्तग्रन्थान् विरच्य सर्वत्र भरतखण्डे तदधिकारि-भ्यस्तान्युपदेशादिना षण्मतानि प्रतिष्ठाप्य श्रुत्यर्थविरुद्धार्थवादिनां मतानि सर्वाणि दुर्दशां नीतानीति भारतीया अन्ये च जानन्त्येव । तेषु भाष्येष्वन्यतममिदं ब्रह्मसूत्रभाष्यम् ।

तत्रैतद्भाष्यं वेदान्तवाक्येषु ( =उनिषत्सु ) उपन्यासरूपेणैव विषयाणामात्मस्व-रूपतदवगमोपायविद्यामार्गहेतूनामन्येषां च निरूपणात्तत्र प्राप्तसंशयपूर्वपक्षादिकानां निरासार्थं प्रवृत्तानां महोपन्यासानां तदुपयोगिनां स्वतन्त्राणां लघूपन्यासानां चैकनवत्युत्तर-[illegible]न्यांकानां समुदायरूपमेव गीतारूपोपन्यासवत् । एतादृशोपन्यासैर्विना तत्राधि-कारिणं निकृष्टतत्तदर्थविषयकज्ञानसम्पादकोपायान्तरार्थप्रतिपादकग्रन्थाभावात्तदिदं तद-धिकारिणामध्येतॄणामध्यापकानां चोत्तमज्ञानसंपादकत्वाचाध्येतव्यमेव । एतद्ग्रन्थगता संस्कृतभाषाशैली महाभाष्यवदतीव गम्भीरा सारार्थगर्भिता सरला चेति दिक् ।

## ब्रह्मसूत्रकृद्विषयको विचारः--

'नारायणं पद्मभुवं वसिष्ठं शक्तिं च तत्पुत्रपराशरं च ।
व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्य शिष्यम्' ( १ )
'शङ्करं शङ्कराचार्यं केशवं बादरायणम् ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः' ( २ )

इति सम्प्रदायानुरोधान्नारायणादिका श्रीशङ्कराचार्यान्ता गुरुपरम्परा भवति । अत्र 'व्यासं शुकम्' इत्यत्र व्यासमित्युक्त्या 'केशवं बादरायणम्' 'सूत्रभाष्यकृतौ वन्दे' इत्यत्र 'भाष्यकृतम्' इत्युक्त्या च व्यासस्यैव बादरायणमिति कृष्णद्वैपायन इति च नामान्तरमिति सिद्ध्यति । न च बादरायणो व्यासाद्भिन्न एव । स्वकृते 'अपिशब्दाज्जैमिनिबादरायणयोरत्र प्रतिपत्तिं शास्ति प्रतिपत्तिदाढर्च्याय' इति ( ब्रह्मसू० ३ । ४ । ४० ) सूत्रे 'भावं च बादरायणोस्ति हि' इति ( ब्रह्मसू० १ । ३ । ३३ ) सूत्रे च व्यासेन बादरायणग्रहणादिति वाच्यम् । परोक्षत्वेन स्वनाम्न एव तत्र निर्देशात् । 'अपिशब्दाज्जैमिनिबादरायण'-इत्यत्र व्यासेन जैमिनिग्रहणेन जैमिनिसूत्रोत्तरकालिकं ब्रह्मसूत्रमिति सिद्धम् । स चायं कलिद्वापरयोः सन्धौ पराशरात्सत्यवत्यामजनिष्ट । अत एव 'अपान्तरतमानाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात्कलिद्वापरयोः सन्धौ कृष्णद्वैपायनः सम्बभूव' इति ( ब्रह्मसू० ३।३।३२ ) शारीरके भाष्ये श्रीमच्छङ्करभगवत्पादैरुक्तं संगच्छते ।

अत्रेदं तत्त्वम्-कृतादिषु त्रिषु युगेषु ब्राह्मणादयो वर्णाः स्वभावत एव स्वस्ववर्णाश्रमधर्मेषु लग्नचित्ता अपि क्रमेण किञ्चित्किञ्चिद्युगानुसारेण स्वस्ववर्णाश्रमधर्मानुष्ठानेष्वात्मोपासनात्मज्ञानयोस्तथा तदुपयुक्तसाङ्गानां मन्त्रब्राह्मणात्मनां वेदानामध्ययनेऽध्यापने चाशक्ता अभूवन् । ततो निस्तेजस्कतयाऽल्पायुषामल्पबुद्धीनामल्पवीर्याणां च लोकानामुद्दिधीर्षया भगवान्परमकारुणिको विष्णुर्व्यासरूपेणावतीर्य-

"द्वापरेद्वापरे विष्णुर्व्यासरूपी महामुने । वेदमेकं स बहुधा कुरुते जगतो हितम् ॥
वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य सः । हिताय सर्वभूतानां वेदभेदान्करोति सः ॥
ययासौ कुरुते तन्वा वेदमेकं पृथक्प्रभुः । वेदव्यासाभिधाना तु सा च मूर्तिर्मधुद्विषः ॥
यस्मिन्मन्वन्तरे येये व्यासाः स्युस्तान्निबोधत। यथा च भेदः शाखानां व्यासेन क्रियते मुने॥
अष्टाविंशतिकृत्वो वै वेदा व्यस्ता महर्षिभिः । वैवस्वतेन्तरे तस्मिन्द्वापरे च पुनःपुनः ॥
वेदव्यासा व्यतीता ये ह्यष्टाविंशति सत्तम । चतुर्धा यैः कृतो वेदो द्वापरे च पुनःपुनः ॥"

इति-( विष्णुपुराणे ३ येशे ३ येऽध्या० ) विष्णुपुराणवचनैः-

'द्वापरे तु परावृत्ते मनोः स्वायम्भुवेन्तरे । ब्रह्मा मनुमुवाचेदं वेदान्व्यस्य प्रजापते ॥'

इति ( वायुपुराणे ) वचनानुरोधेन द्वापरसन्ध्यांशेषु तेषां लोकानां योग्यतानुसारेण गतान्तिमद्वापरावध्यष्टाविंशतिकृत्वश्चतुर्ष्वपि वेदेष्वावश्यकानेव स्वस्वकर्माद्युपयोगिनो भागानेवाध्ययनाध्यापनाद्यर्थं स्थापयित्वाऽन्येषां भागानामनावश्यकत्वं प्रकटय्योत्तममध्यमाधमाधिकारिणो ब्राह्मणांस्तत्तदध्ययनादौ स्थापनेन वैदिकमार्गं प्रचारयामास । ततोऽल्पेनैव कालेन बुद्धिदौर्बल्यादिना वेदार्थधारणायामसामर्थ्येनापार्थादिकरणेन प्रवृत्ति-

मार्गप्रक्रियात्यन्तं दुर्दशामाप। ततस्तमेनं भ्रष्टं पर्यालोच्य परया कृपया महर्षिर्जैमिनिः कर्ममीमांसाशास्त्रं विरच्य तदुपदेशादिना श्रौतप्रक्रियां यथावत्प्रवर्तयामास। ततः कालान्तरे तेषां कालवशेन तत्तज्जैमिनिसूत्राणामर्थानवगमेनापार्थकरणेन च पुनः कर्ममार्गे दोषबाहुल्यं पर्यालोच्य कृपया जैमिनिसूत्राणां शबरस्वामिना भाष्यं कृत्वा तत्प्रचारादिना कर्ममार्गः पुनः समीचक्रे। ततः कालवशेन काम्यार्थमेव कर्मसु लग्नाँल्लोकानालक्ष्य भगवानीशः उपनिषदमुपदिदेश। ततस्तस्यापार्थादिकरणेनागतार्थतां पर्यालोच्य ततो द्वे उपनिषदौ, ततः पुनरुपनिषदस्तिस्रस्ततश्चतस्रस्ततः पञ्च ततः षट् ततः सप्त ततोऽष्टौ ततो नव ततो दशेत्येवं कालक्रमप्राप्तानिष्टपरिहारयोग्यत्वानुसारेणैकैकाधिक्यमाश्रित्य बह्वय उपनिषद उपदिदेश साक्षात्परम्परया च। ततः पुनरपि कालगत्या प्रागुक्तरीत्या सिद्धान्तार्थग्रहणासामर्थ्येन यथेच्छमर्थपरिकल्पनया युक्तिभिश्च तत्कालसहायादिसम्पत्तिलब्धाभिः कांश्चिन्नास्तिकप्रायान्, आस्तिकेष्वपि कांश्चिदद्वैतात्मतत्त्वविपरीतार्थं वर्णयत आलक्ष्य तेषामुद्दिधीर्षया प्रागुक्तः परमकारुणिको भगवान्वेदव्यासः श्रीमद्भगवद्गीतासहितं महाभारतं चक्रे। 'अष्टादश पुराणानि कृत्वा सत्यवतीसुतः। भारताख्यानमखिलं चक्रे तदुपबृंहितम्' इति (मात्स्ये) उक्तेः।

भगवद्गीता चेयं ब्रह्मसूत्रप्रणयनोत्तरकालिकी यतः–

'स च यो यत्प्रभावश्च तत्समासेन मे शृणु (३) ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' (४) इति (महाभार० भीष्म० भगद्गी० १३ ध्या०) भगवद्गीतायां भगवता ब्रह्मसूत्रपदैरित्युक्तेः। एवं च क्रमेण लोकेषु प्राप्तानामज्ञानानां निरासाय कालानुसारेणैकैकक्रमेणोपदिष्टाभिरुपनिषद्भिस्तथा तात्कालिकविद्वत्कल्पितोपनिषदपार्थानां निराकरणाय कृतैर्ब्रह्मसूत्रैस्तथा 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति तदुत्तरकालिकविद्वत्कल्पितापार्थानां निराकरणाय तत्काल उपदिष्टयेतिहासान्तर्गतया भगवद्गीताख्ययोपनिषदा च तत्तद्वैपरीत्ये निर्मूलितेऽपि ततश्चिरात्कलिप्राबल्येन द्वापरान्ते प्रसिद्धानां नास्तिकानां नाम ब्रह्मसूत्रकालप्राक्कालादारभ्य प्रवृत्तानां बुद्धसम्मतानां सांख्याद्यास्तिकानां स्वमतप्रचारप्राबल्याय प्रवृत्तेस्तन्मतेषु प्रबलेषु पुनरपि वैदिकमार्गभ्रंशं तन्मूलभूतां कल्क्यवतारान्तं निर्निरोधेन कलिप्रवृत्तिं च विचिन्त्य–

'यदायदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्'॥
(भ० गी० ४।७) इति,

'परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय संभवामि युगेयुगे'॥
(भ० गी० ४।८) इति च–

वचनाभ्यां सिद्धेन यदायदा वैदिकमार्गनिरोधेन साधूनामुपद्रवो यदायदा च तन्निरोधेन देवानामाढ्यत्वभावेन वृत्त्यभावाल्लोकक्षोभादिस्तदातदावतार इति भगवदुक्तनियमेन देवमार्थितः शङ्करः स्वयं श्रीशंकराचार्यरूपेणावतीर्याऽद्वैतात्मतत्त्वोपदेशेनैव वैदिकमार्गं प्रवृत्तिप्रतिबन्धनिरासद्वारा तं यथावल्लोके प्रतिष्ठाप्याऽसाधून्निराचकार। एवमन्यदावतीर्योपनिषद्भाष्यसूत्रगीताभाष्यादिकरणेन, अन्यदावतीर्य नास्तिकादीनां सुधन्वादिराजद्वारा निरासेन, अन्यदा–

वतीर्य सर्वत्र भरतखण्डे जायमाननास्तिकाद्युपद्रवोपशान्तये लोकानुमत्या चतुर्ष्वपि दिक्षु मठान्निर्माय तेषु विद्याधर्मपीठाधिपत्येन धर्माद्वैतात्मतत्त्वोपदेष्टॄन् नियोज्य लोकानां शिष्यत्वपरिकल्पनया, अन्यदावतीर्य सनत्सुजातीयविष्णुसहस्रनामग्रन्थयोर्भाष्यकरणेन, तथान्यदावतीर्य काञ्चीकामाक्ष्यादिमन्दिरनिर्माणादिना, श्रीचक्रप्रतिष्ठादिना, ललितासहस्रनाम्नां ललितात्रिशतनाम्नां च भाष्यनिर्माणेन चेत्येवं भगवता शंकरेण महद्भ्य आपद्भ्यो वैदिकमार्गोऽरक्षि । एवमग्रेपि तेन कल्यवतारान्तं पुनःपुनरवतीर्य वैदिको मार्गो रक्षिष्यते च ।

न च 'यदायदा हि धर्मस्य' इति, 'परित्राणाय साधूनाम्' इति वचनं भगवतो वासुदेवस्यैवेति तत्राहमित्यनेन भगवतो वासुदेवस्यैव ग्राह्यत्वेन कथं शंकरस्यासकृदवतारेष्विदं मानं स्यादिति वाच्यम् । 'रुद्राणां शंकरश्चास्मि' इति ( श्रीमहाभारते भीष्मपर्वणि भगवद्गीतायां १० मेऽध्या० २३ श्लो० ) भगवता वासुदेवेन स्वाभेदस्य शंकरे प्रतिपादनेन तत्र भेदबुद्धेर्दोषग्रस्तत्वात् । स्पष्टश्चायमर्थोऽन्यत्र महानिबन्धेष्विति नात्र वितन्यते इति दिक् ।

ननु "शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम् । येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि ॥
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम् । मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम् ॥
कणादेन च सम्प्रोक्तं शास्त्रं वैशेषिकं महत् । गौतमेन तथा न्यायं साङ्ख्यं तु कपिलेन वै ॥
द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः । निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम् ।
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम् ॥
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा । बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम् ॥
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च । मयैव कथितं देवि कलौ ब्राह्मणरूपिणा ॥
अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् । कर्मस्वरूपत्याज्यत्वमत्र च प्रतिपाद्यते ॥
ब्रह्मणोऽस्य परं रूपं निर्गुणं दर्शितं मया । सर्वस्य जगतोऽप्यस्य नाशनार्थं कलौ युगे ॥
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि जगतां नाशकारणात् ॥"

इति ( पाद्मे उत्तरखण्डे ४२ तमेऽध्याये ) व्यासोक्तेः, 'मायावादमसच्छास्त्रम्' इति, 'मयैव कथितं देवि कलौ ब्राह्मणरूपिणा' इति, 'तामसानि यथाक्रमम्' इति, 'येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि' इति च पदैः कलौ श्रीशंकराचार्यावताररूपेण मयाऽसच्छास्त्रं मायावादमद्वैतवेदान्तशास्त्रं जगन्नाशनिमित्तं श्रवणमात्रेणापि पातित्यापादकं कृतमिति कैरस्यानिष्टावहत्वं कण्ठरवेणोक्तमिति कथमद्वैतात्मतत्त्वप्रतिपादकस्यास्य शास्त्रस्य लोकहितावहत्वं ( = मोक्षसम्पादकत्वेन ) प्रामाणिकत्वं चेति चेत्—न—

'कलौ रुद्रो महादेवो लोकानामीश्वरः परः । तदेव साधयेन्नॄणां देवतानां च दैवतम् ॥
करिष्यत्यवताराणि शङ्करो नीललोहितः । श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥
उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् । सर्ववेदान्तसारं हि धर्मान्वेदनिदर्शनान् ॥
ये तं प्रीत्या निषेवन्ते येनकेनोपचारतः । विजित्य कलिजान्दोषान्यान्ति ते परमं पदम् ॥
अनायासेन सुमहत्पुण्यं ते यान्ति मानवाः । अनेकदोषदुष्टस्य कलेरेष महान्गुणः ॥"इति—

( कौर्मे पुराणे पूर्वखण्डे ३० तमेऽध्याये[१] ) श्रौतस्मार्तधर्मप्रतिष्ठायै भक्तहितेच्छया ब्रह्म-

---

१ कूर्मपुराणे ब्राह्मीसंहितायां २९ तमेऽध्याये, इति पुस्तकान्तरे पाठान्तरम् ।

ज्ञानमुपदेक्ष्यतीत्युक्त्वा कलिदोषनिरासपूर्वकं परं पदमेवच्छ्रोतारो यान्तीत्युक्तिविरोधेनास्या-ऽप्रामाणिकत्वात् । न च विनिगमनाविरहात्तेन विरुद्धोयमेवार्थोऽप्रामाणिकः कुतो न स्यादिति वाच्यम् ।

'व्याकुर्वन्व्याससूत्रार्थं श्रुतेरर्थं यथोचिवान् । श्रुतेर्न्यायः स एवार्थः शंकरः सवितानन: (ना)' ॥

इति ( शिवपुराणे ७ खं० १ अध्या० ) व्यासोक्तयुपष्टम्भेन कूर्मपुराणोक्तस्यैव प्रामाणिकत्वात् । अतएव 'रुद्राणां शंकरश्चास्मि ' इति ( भगवद्गी० १० । २३ ) भगवदुक्तिः संगच्छते । एवं च पाद्मोत्तरखण्डोक्तत्वेन प्रागुक्तानि पद्यान्यत्र द्वेषेण कैश्चित्प्रक्षिप्तान्येव यतोऽन्यत्र पुस्तकेष्वदृष्टान्येतानि वचनानीदानीं केषुचित्पुस्तकेषु दृश्यन्त इति दिक् ।

यत्तु श्रीमच्छङ्कराचार्यैर्बौद्धानां मतस्य निरस्तत्वाद्बौद्धावतारोत्तरं तन्मतं तेन सर्वत्र प्रचारिते सति वैदिकमार्गाणां नाशेन तदुद्धाराय प्रार्थितानां देवानामनुमत्या श्रीशंकरावतार इति स कालो बुद्धावतारोत्तरं प्रायः पञ्चाशता शतेन द्विशतेन त्रिशतेन वा वर्षैः स्यादिति स एव कालः श्रीमच्छङ्कराचार्याणामिति वक्तव्यम् । तन्न युज्यते । साक्षाद्विष्णोरेव पितॄणां तारके गयाक्षेत्रे बुद्धरूपेणावतीर्णत्वेन भगवद्रूपत्वाद्भगवद्गीतादिवत्तदुक्तानां तदुपदिष्टानां वार्थानां खण्डनस्यायुक्तत्वे तदर्थं श्रीमच्छङ्कराचार्याणामवतार इत्यस्य सुतरामयुक्तत्वात् । अस्य भगवदवतारत्वादेव सर्वत्र कर्म्मारम्भे क्रियमाणेषु संकल्पेषु बौद्धावतारे इति तत आरभ्य पठ्यते, पठिष्यते कल्क्यवतारान्तम् । एवं चैतन्मतस्य निर्दुष्टत्वेन तत्प्रचारो निर्दुष्ट एवेति ॥ तत्र–गौतमादिषु महर्षिषु कृतापराधेभ्यो ब्राह्मणेभ्यस्तैर्गौतमादिभिर्दत्तानां शापानां साफल्यार्थं किञ्चित्कालपर्यन्तं वैदिकमार्गनिरोधकदुरुपदेशप्रचाराय तदवतार इति ब्रह्मदत्तवरेणोन्मत्तस्य रावणादेर्निमर्दाय रामादेरवतारवत्तदुत्पन्नानर्थनिवर्तनायास्याचार्यस्यावतार इत्यदोषात् । न च श्रीमच्छंकराचार्यस्यापि शिवावतारत्वेन संकल्पे बौद्धावतारे इतिवच्छ्रीशंकरावतार इत्यस्यापि प्रवेशो दुर्वार इति वाच्यम् । कालप्रवर्तकत्वेन कालशोधकत्वेन प्रवृत्ते द्विविधेऽवतारे कालप्रवर्तकावतारवतामेव संकल्पे निवेशो न कालशोधकानामाचार्यादीनामित्यदोषात् ।

कलेर्जन्मकालादारभ्य जनमेजयराज्यपर्यन्तं स्वधर्मप्रचारायासामर्थ्यं दृष्ट्वा भगवान् विष्णुः कलियुगप्रवृत्त्यर्थं गयाक्षेत्रे बुद्धरूपेणावततार । ततो नन्दात्प्रभृति कलिर्वृद्धिमापेति बौद्धावतारस्य कालप्रवर्तकत्वम् । तदुक्तं व्यासेन–'यावत्सपादपद्माभ्यां स्पृशन्नास्ते रमापतिः । तावत्कलिर्वै पृथिवीं पराक्रान्तुं न चाशकद्' इति ( श्रीमद्भा० १२ शे स्कं० २ येऽध्याये ) तथा 'तदा नन्दात्प्रभृत्येष कलिर्वृद्धिं गमिष्यति' इति ( तत्रैवाध्याये ) च । नन्दराज्यकालश्च 'आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम् । एतद्वर्षसहस्रं तु शतं पञ्चदशोत्तरम्' इति ( श्रीमद्भा० १२ शे स्क० २ येऽध्या० ) तथा 'आकृष्णनिर्गमात्त्रिंशद्वर्षाधिके गते कलौ । नवमीतो नभस्ये च कथारम्भं शुकोऽकरोत् । परीक्षिच्छ्रवणान्ते च कलौ वर्षशतद्वये । शुद्धे शुचौ नवम्यां च धेनुजोऽकथयत्कथाम्' इति ( पाद्मे उत्तरखण्डे भागवतमाहात्म्ये गोकर्णवर्णने ६ष्ठेऽध्या० ) चोक्तेः कलेः पञ्चदशोत्तरैकशताधिकैकसहस्रप्रवर्षेभ्यः ( १०१५ ) उत्तरः काल एव । एवं च बुद्धावतारकालोपि स एव । "यदायदा

हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे" इति (महाभारतभीष्म० भग०४।७,८) स्वप्रतिज्ञानुरोधेन धर्मप्रवर्तनायावतारो युक्तो नाधर्मप्रवर्तनायेति कथमस्यावतारस्योपपत्तिरिति तु कलियुगप्रवृत्त्यर्थत्वादित्यन्यत्र विस्तरः। नचैवं 'ब्रह्मसूत्रपदेश्चैव' इति (भ० गी० १३।४) व्यासेनोक्तेश्च (भारतस्थ) भगवद्गीतायाः प्रागेव व्यासेन ब्रह्मसूत्राणि बौद्धादिनिग्रहार्थं कृतानीति प्रागुक्तं कथं संगच्छते इति वाच्यम्। कलेः १०१९ तमवर्षेभ्योऽधिकेषु बहुषु वर्षेषु व्यतीतेष्ववतीर्णस्य बुद्धादेर्मतस्य प्राबल्येन वैदिकमार्गे भ्रंशिते व्यासेन ब्रह्मसूत्राणि प्रणीतानि ततो महाभारतं कृतमित्यदोषात्। नचैवं भारतयुद्धसमये भगवता श्रीकृष्णेन युद्धरंगेऽर्जुनाय भगवद्गीत या उपदेशः कथं युज्यते। युद्धोत्तरकालिकभारतग्रन्थस्यभीष्मपर्वगतत्वाद्भगवद्गीतायास्तदानीमसत्त्वादिति वाच्यम्। युद्धे केवलं तत्त्वार्थमात्रस्यैवोपदेशात्। कालान्तरे भगवता व्यासेन महाभारतकृतिनिर्माणसमये भगवदुपदिष्टार्थस्य पद्यरूपेण कृतत्वेनादोषाच्च। नच श्रीकृष्णेनार्जुनाय क्षेत्रस्वरूपोपदेशसमये 'ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक्। ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' इति (भगवद्गी० १३।४) वचने ब्रह्मसूत्रपदैरित्युक्तिः कथं सङ्गच्छतां त्वन्मते तदानीं ब्रह्मसूत्राणामनिर्मितत्वादिति वाच्यम्। भविष्यदर्थं भूतार्थं चाश्रित्य भगवता तथोक्तेरिति दिक्।

एतेन मण्डनमिश्रं त्रोटकपद्मपादहस्तामलकादीनां नामसु कस्यापि नाम्नः स्वकृतभाष्येषु क्वापि विचारे पूर्वपक्षित्वेन सिद्धान्तित्वेन प्रकारान्तरेण वानुल्लखात्, सरस्वतीमाध्यस्थ्यादेः प्राभाकरोक्तित्वेन वा तत्तदुल्लेखस्यावश्यकत्वेऽपि तदकरणेन चाद्यश्रीशंकराचार्येण न भाष्याणि कृतानि, येन भाष्याणि कृतानि तस्य नैतैः समावेश इति च परास्तम्। एतैः सह समावेशात्प्रागेव भाष्यकरणेन तत्र तदयोगात्। न च विनिगमनाविरहादतैः सह समावेशात्प्रागेव भाष्यकरणेन तत्र तदयोगात्। न च विनिगमनाविरहादतैः सह सङ्गताच्छ्रीशंकराचार्यादन्य एव शंकराचार्यो भाष्यकर्तेति न तत्र कस्यापि नामान्युल्लिखितानीति युक्त एव तदनुल्लेख इति वाच्यम् इष्टापत्तेः। चरित्रेषु प्रतिपादिताः सर्वेऽप्यंशा नेकसम्बन्धिन इति प्रागेवोक्तेरिति दिक्।

## प्राचीनानि ब्रह्मसूत्रभाष्याणि (मतान्तरानुसारीणि)–

श्रीकण्ठभाष्यं–श्रीकण्ठाचार्यकृतम्।

व्या० शिवार्कमणिदीपिका–श्रीमदप्पय्यदीक्षितकृता।

श्रीभाष्यं–श्रीरामानुजार्यकृतम्।

मध्वभाष्यं–श्रीमध्वाचार्यकृतम्।

अणुभाष्यं–श्रीवल्लभाचार्यकृतम्।

निम्बार्कभाष्यं–(सनकसम्प्रदायप्रवर्तकाचार्य) श्रीनिम्बार्काचार्यकृतम्। शिष्टं परिशिष्टे स्फुटं प्रकाशिष्यते

सङ्क्षेपेण श्रीशङ्कराचार्यचरित्रवर्णनम्-( शंकराचार्यनो समय नामके पुस्तके )-

| | |
|---|---|
| युधिष्ठिरशकस्य २६३१ वैशा० शुक्ले५ | श्रीशंकराचार्याणां जन्म = अवतारः । |
| ,, २६३६ चैत्रे शु० ९ | एतेषामुपनयनम् । |
| ,, २६३९ कार्ति० शु० ११ | एतेषां सन्न्यासः । |
| ,, २६४० फाल्गु०शु० २<br>,, २६४६ ज्येष्ठे कृष्ण ३० | किंचिदधिकेषु पञ्चस्वेषु वर्षेषु श्रीगोविन्दभगवत्पाददर्शनं तत्कृतोपदेशलाभः, बदर्याश्रमे ब्रह्मसूत्रेशकेनकठप्रश्नमुण्डमाण्डूक्यतैत्तिरीयैतरेयच्छान्दोग्यबृहदारण्यकनृसिंहतापन्युपनिषद्भगवद्गीतासनत्सुजातीयविष्णुसहस्रनामललितात्रिशतीभाष्याणां प्रणयनं,व्यासदर्शनम, सर्वत्राद्वैतात्मतत्त्वपरेतमस्थानत्रयस्य भरतखण्डे प्रचारः, पद्मपादेन सङ्गतिश्च । |
| ,, २६४७ मार्ग० कृष्णे २ | सरस्वत्या मण्डनमिश्रपत्न्या माध्यस्थ्यकल्पनाद्वारा मण्डनमिश्रेण सह वादारम्भः । |
| ,, २६४८ चैत्रे शु० ४ | मण्डनमिश्रस्य पराजयः । |
| ,, ,, ,, ,, ६ | मण्डनमिश्रपत्न्या सरस्वत्या सह संवादः । |
| ,, ,, ,, कृष्णे ८ | परकाये प्रवेश आचार्याणाम् । |
| ,, ,, कार्ति० शु० १३ | तेषां स्वदेहे परदेहात्प्रत्यागमनम् । |
| ,, ,, ,, कृष्णे १ | ब्रह्मलोकं प्रति निर्गतायाः सरस्वत्याश्चिन्तामणि-( गणपति ) मन्त्रेण निरोधो द्वारकायाम् । |
| ,, ,, ,, ,, ५ | द्वारकायां पीठे शारदाप्रतिष्ठा । |
| ,, ,, ,, ,, १३<br>,, ,, माघे शु० १० | किञ्चिदधिकयोर्द्वयोरनयोर्मासयोः शारदामठस्य निर्मितिः, तत्र बौद्धपराजयः, रुद्रमालस्य रजतेन मन्दिरनिर्मितिः, श्रीकृष्णमूर्तिप्रतिष्ठा,सिद्धेश्वरमन्दिरनिर्मितिः, भद्रकालीयन्त्रोद्धारश्च । |
| ,, ,, फाल्गु शु० ९ | ब्रह्मलोकगमनोद्यतायाः सरस्वत्याः प्रागुक्तमन्त्रेण पुनर्निरोधः, तस्याः मैसूरराज्यान्तर्गतशृङ्गेर्यामानयनं, तत्र प्रतिष्ठापनं च । |
| ,, २६४९ चैत्र शु० ९ | मण्डनमिश्रस्य सन्न्यासः सुरेश्वराचार्य इति नाम च । |
| ,, ,, मार्ग० शु० १० | सुधन्वराजस्याचार्यशिष्यत्वस्वीकारः । |
| ,, ,, माघे कृष्णे ७ | श्रीशंकराचार्याज्ञया सुरेश्वराचार्यस्य शारदापीठाधिकारप्राप्तिः । |

१ जन्मादिदेहत्यागपर्यन्तं यद्वर्षं निर्दिष्टं तदिदं भिन्नभिन्नशङ्कराचार्यैर्भिन्नभिन्नकालेषु कृतानां चरित्राणां एकीकरणमिति मम प्रतिभाति ।

| | |
|---|---|
| " २६५० वैशाखे शु० १३ | श्रीशंकराचार्याणां दिग्विजययात्रारम्भः । |
| " २६५३ श्रावण " ७ | तो ( त्रो ) टकाचार्यागमनम् । |
| " २६५४ आषाढे " ११ | हस्तामलकाचार्यागमनम् । |
| " " पुष्य " १५ | श्रीशंकराचार्याज्ञया शृङ्गगि ( ङ्गे ) र्यां हस्तामलकाचार्यस्य पीठाधिकारप्राप्तिः, ज्योतिर्म-( = जोशीम ) ठीयपीठाधिकारप्राप्तिस्त्रोटकाचार्यस्य । |
| " २६५५ वैशाखे " १० | पुरुषोत्तमक्षेत्रे ( = जगन्नाथक्षेत्रे ) काष्ठप्रतिमायां भगवत्प्रतिष्ठापनं, तत्र मर्यादाव्यवस्था, तत्र गोवर्धनमठप्रतिष्ठा, तत्र पद्मपादाचार्यस्य तत्पीठाधिकारदानम् । |
| " " भाद्र० " १५<br>" २६६२ पुष्ये कृ० ३० | बौद्धकापालिकाद्येकोननवतिमतानां निराकरणम् । |
| " २६६३ कार्ति० शुक्ल १५ | कैलास प्रति गमनम् । |

## श्रीशंकराचार्यचरित्रम्–

पुरैकदा सर्वे देवाः कैलासमुपेत्य शिवं प्रणिपत्योचुः–भो देवेदानीं बुद्धादिप्रणीतागमालम्बैर्जैनैर्वसुन्धरा व्याप्ताम्नायदूषकैः । तदधुना श्रौतस्मार्तकर्मशून्या भारतभूरभूदिति श्रौतमार्गप्रवर्तनाय विना त्वया नान्यः शरणमिति । तदा शम्भुस्तानब्रवीत्–भुवि मानुषीं तनुमाश्रित्य परमहंसपदधरोऽहं शंकराख्यया चतुर्भिः शिष्यैः सह वो मनोरथान्पूरयिष्ये,तद्भवन्तोपि मत्सहायार्थं मानुषीस्तनूर्धृत्वा मदीयागमनं प्रतिपालयन्तु,कुमारस्तु सुब्रह्मण्याख्यया भूतले मानुषो भूत्वा कर्मकाण्डमुद्धरतु, तत्सहायार्थं ब्रह्मापि मण्डनो नाम भूसुरः स्यात्, महेन्द्रोऽपि सुधन्वाख्यो भूपतिर्भवत्विति तदाज्ञया तथाऽभूवन् । कुमारोपि भट्टपादाख्यया भुव्यजनिष्ट । अथ केनचित्कालेन भट्टपादो वेदार्थसमीकरणाय सतां जैमिनिसूत्राणां तात्पर्यं स्फुटयन् सुधन्वनगरीं प्राप्य तत्र राज्ञा तेन पूजितस्तत्सभासनमध्यास्य कोकिलकूजितमाकर्ण्य तद्व्याजात्सौगतान् क्षोभयन्नेवं राजानमाह–

'मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक । श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः'इति॥

तत इमां वाचं निशम्य दशबला भृशं चुक्रुधुस्तस्मै तदा भट्टपादो वादे बुद्धसिद्धान्तानखण्डयत् । ततः सुधन्वनृपतिरवादीत्–भोः पण्डिताः शृणुत–नात्र मे विश्वासः किन्तु स्वमतमाश्रित्य यो गिरेः शृङ्गात्पतित्वाऽव्ययो भविष्यति तस्यैव मतं ध्रुवमिति।ततः स भट्टपादो वेदान्स्मरन् गिरेः शृङ्गं समारुह्य "यदि वेदाः प्रमाणं स्युर्भूयात्काचिन्न मे क्षतिः" इत्युक्त्वाद्रेः शृङ्गाद् भूमौ पतंस्तूलराशिरिवाक्षतशरीर एवाऽभवत् । परं तु यदीति संशयद्योतकशब्दप्रयोगान्नष्टैकनयनोऽभूत्।एवमक्षतं तं पण्डितं दृष्ट्वाकर्ण्य च द्विजाः दशभ्यो दिग्भ्यः समाययुः। तत्कृत्यमवलोक्य खलदूषितमात्मानं विचिन्त्य श्रुतिषु श्रद्दधाने नृपतिं तं दृष्ट्वा सौगतैरुक्तं–नेदं मतनिर्णये प्रमाणं, मणिमन्त्रौषधिभिरपि देहरक्षा कर्तुं शक्येति । ततस्तन्निशम्य भवतः प्रश्नमेकं पृच्छामि,प्रतिवक्तुं ये न प्रभवन्ति तान्यन्त्रोपलेषु घातयिष्यामीत्युक्त्वा नरपतिर्घट-

१ वैशाखे शुक्ले पञ्चम्यामिति शंकरजयन्तीप्रकाशिकाकृत इत्यन्ये। जन्मतो द्वात्रिंशद्वर्षोत्तरं दत्तात्रेयेण सह हिमवद्गिरिगुहायां वैशाखे शुक्ले द्वादश्यां श्रीमच्छंकरभगवत्पादाचार्याणां प्रवेश इति शंकरजयन्तीप्रकाशिकाकृत इत्यपरे ।

माशीविषपूरितमेकमानीय किमत्रास्तीत्यपृच्छत् । श्वः प्रातरेवास्योत्तरं वक्ष्याम इत्युक्त्वा सर्वे स्वस्वगृहाणि जग्मुः । तस्यां रात्रौ द्विजाः कण्ठद्वयसे पयसि स्थित्वा सूर्यं प्रसाद्य तद् जानन् । अन्येद्युः तत्सभामागत्य भुजगोऽत्रेति सौगतैः, भगिशयनोत्रेति द्विजैरूचे । तच्छ्रुत्वा म्लानमुखो राजा द्विजोक्तिः सत्येत्यशरीरिणीं वाचं श्रुत्वा कुम्भे तां मूर्तिमेव प्रेक्ष्य मुदमवाप । ततः श्रुतिद्विषः सर्वे वध्यन्तामित्यवनीपतेराज्ञया धर्मद्विषस्ते निहताः ।

ततः–कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु । निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः ॥

एवं तेन वैदिककर्ममार्गे पुनर्भुवि यथावत्प्रवर्तिते शिवो धरातलेऽवतितीर्षया केरलनरपतेः स्वप्नेऽवदत्–पूर्णाभिधाया हृदिन्यास्तटे मत्कृते प्रासादमेकं परिकल्प्य मदीयां सपर्यां सपरिकरो विधेहीति । स तदा तदाज्ञानुसारेण प्रासादं निर्माय तत्र शिवलिङ्गं प्रतिष्ठाप्याऽर्चनं नित्यं व्यधात् । तस्यानतिदूरे कालटिनाम्न्यग्रहारे वेदवेदाङ्गपारगो विद्याधिराजनाम्ना ख्यातो भूसुरो न्यवसत् । तस्य शिवगुरुर्नाम तनुजोऽभूत् । स साङ्गवेदानधीत्य गुरोराज्ञया गृहमागत्य गुरुपित्रोराग्रहेणानुरूपां वधूं लब्ध्वा तया सह सत्पुत्रोत्पादयिषया शिवं भक्त्या पूजयांचक्रे । ततः कदाचिन्निद्रां गतः स्वप्ने महेश्वरेण वत्स वरं वृणीष्वेत्युक्तः शिवगुरुरेकं भवन्तमिव सर्वज्ञं सर्वशक्तिं च पुत्रं मे देहीति वरं वव्रे । तदाकर्ण्य तथास्त्विति महेश्वरेणोक्तस्तस्यां रात्रौ स शम्भुतेजसा युक्तस्तस्यां धर्मपत्न्यां गर्भमाधत्त । ततः सुमुहूर्ते सा शंकराख्यं पुत्रं सुषुवे । ततः स पुत्रजन्म श्रुत्वा जातकर्मादीनि कर्माणि निर्वर्त्य परमानन्दमवाप ।

ततो देवेषु मध्ये विष्णुर्विमलोदराद्विदुपः पद्मपादनामा वायुर्हस्तामलकनामाऽग्निस्त्रोटकनामा ब्रह्मा मण्डनाभिधो यः सुरेश्वरनामाभूत् । वरुणाश्रितसुसनामा प्रादुरभूत् । मण्डनमिश्रः सुरेश्वरोऽभूत् । वाचस्पतिरानन्दगिरिरभूत् । नन्यानन्दगिरिरभूदिति केचित् ।

अथैकदा वेदान्पठन् दुर्वासा महर्षिः स्वीयस्वरस्खालित्यं वीक्ष्य हसन्तीं सरस्वतीं मनुष्ययोनिं प्रतिपद्यस्वेति शशाप । तेन ऋषिभिरनुनीतेनाऽस्यास्तावन्मानुषं जन्म यावन्मानवशम्भोर्दर्शनं, ततः सा देवत्वं प्राप्स्यतीत्युक्ता सा शोणतीरे विष्णुमित्राख्यद्विजवर्यस्य सद्मन्याजन्मसिद्धसकलवेदवेदाङ्गा श्रीसरस्वत्युभयभारत्याख्यया प्रादुर्भूता । योग्ये वयसि विश्वरूपनाम्ने विद्याविनयसम्पन्नाय ब्राह्मणाय स्वपित्रा दत्ता । स एव सकलशास्त्रज्ञो विश्वरूपो मण्डनमिश्राख्यया विश्रुतोऽभूत् ।

श्रीशंकरः प्रथमे वर्षे स्वदेशभाषामजानात् । द्वितीये वर्णविज्ञानपुराणकथाश्रवणादिकमकार्षीत् । तृतीये तु दैवादस्य पिता मृत्युमयासीत् । चतुर्थे महेशतः सर्वज्ञत्वं प्राप । पञ्चमे गुरुणोपनीतः सांगान्वेदानधीत्यार्थतो व्याकरोत् । षड्दर्शनमूलः, इतिहासस्थाणुर्निगमशाखः, षडंगपल्लवः, सुनपुष्पो, मन्त्रशलाटुर्ज्ञानपक्वफलः, श्रीशंकरकल्पवृक्ष आसीदित्यानन्दगिरिः ।

अथैकदा श्रीगुरुर्गुरुगृहे वसन् भैक्ष्यचर्यां चरन् कस्यचिन्निर्धनस्य भूदेवस्य गृहान्प्रविश्याह भवति भिक्षां देहीति, तच्छ्रुत्वा विप्रवधूरुवाच–भगवन् वयं विधिना वञ्चिता त्वद्भाय भोजनदानेऽप्यसमर्थाः स्म इत्युक्त्वाऽऽमलकफलं भिक्षां ददौ । ततो विप्रस्त्रियास्तद्वचनमाकर्ण्य तेनैव सन्तुष्टः श्रीशंकर उवाच–भगवति कमलालयेऽस्या ब्राह्मणस्त्रियो गृहे सन्तुष्टा सततं वसेति । ततस्तद्गृहांगणे सपद्येव श्रिया सन्तुष्टया श्रीशंकरस्य पुरः प्रादुर्भूय

वत्स वरं वृणीष्वेत्युक्तः श्रीशंकरः तद्वंस्या ब्राह्मणस्त्रिया गृहं कनकामलकपूर्णं विधेहीति वरमवृणोत्। ततः सा तद्विप्रगृहं तदा कनकामलकैः पूर्णं विधाय तत्रैवान्तर्हिता वसतिं चकार। षष्ठेब्दे सर्वशास्त्रवेत्ताऽभूत्। ततः सप्तमे श्रीगुरुर्गुरोर्गृहात्प्रतिनिवृत्य मातृसेवापरोऽभवत्। कदाचित् तन्माता नदीं स्नानार्थं गता विललम्बे। ततो गृहान्निर्गत्य श्रीशंकरस्तन्नदीतीरे गतमोहां तां दृष्ट्वा जलार्द्रैः पंकजैर्वीजयन् गृहमानैषीत्। प्रत्यहं रविकिरणैः सा क्लिश्यतीति विचिन्त्य स स्तुत्वा तां नदीं स्वगृहद्वारं प्रापयति स्म। एवं लोके विख्यातं श्रीशङ्करं श्रुत्वा केरलानां राज्ञा राजशेखरेण प्रेषिते स्वामात्ये मृगांके तन्नयनाय प्रणम्य सोपहारं स्वनिवेदितं विज्ञापयति, भैक्षमन्नं परिधानमजिनं नैजं कर्म च विहाय तं कुम्भीगैर्वेयं किं कुर्महे इत्याचार्योऽवदत्। ततस्तं वृत्तान्तं स नृपतये न्यवेदयत्। ततस्स स्वयमेवागत्य प्रणम्योपविश्य कुशलप्रश्नानन्तरं सादरं स्वकृतं नाटकत्रयं तस्मै श्रावयामास। तेन प्रसन्नः श्रीशंकरस्तं वरेण च्छन्दयामास। ततः कदाचिदुपमन्युदधीचिगौतमागस्त्यप्रमुखान् शंकरं द्रष्टुमागतान्मुनीनवलोक्य तन्माता मधुपर्कार्घ्यादिना सत्कृत्य कियदस्यायुरिति साञ्जलिबन्धं प्रार्थयामास। तां तेष्वगस्त्योवदत्—अष्टायूंष्यस्य भवन्ति वयमष्टायूंषि वरं दास्यामः। ततः सर्वे श्रीशंकरमामन्त्र्य यथागतं जग्मुः। ततः स तच्छ्रुत्वा मातरं यतिर्भूत्वा दीर्घायुर्भवामीति सान्त्वनैः सान्त्वयामास। रे बाल गृहस्थो भूत्वा क्रतुभिरिष्ट्वाऽन्ते यतिर्भवितेत्युक्तवतीं मातरं वेदान्तोक्तिभिः समाहितचित्तामकरोत्। अष्टमेऽब्दे संन्यासायाज्ञामदत्तीं मातरं सञ्चिन्त्य सरितं गत्वा स्नानार्थं जलान्तः प्रविश्य ग्राहग्रहार्तो हाम्ब ग्राहेण धृतो न बहिश्चलितुं पारये इत्यवदत्। माता तस्य तां वाचं श्रुत्वा तदवस्थं पुत्रं पश्यन्ती तत्प्रतीकारमपश्यन्ती च भृशं विललाप। अम्ब यदि मे जीवितं तुभ्यं रोचते तर्हि मां संन्यासायाज्ञापय तेन ग्राहग्रहमुक्तो भविष्यामीत्युक्ता माता जीविताशया संन्यास एव वरमिति मत्वा तत्क्षण एवाज्ञां तस्मै ददौ। ततः स तत्रैव संन्यस्य नक्रग्रहान्मुक्तः सलिलादुत्ततार। उत्तीर्य च मातरं प्रणम्येत आरभ्याम्ब पैतृकरिक्थग्राहिभिस्त्वं पाल्यसे। यदा मां स्मरिष्यसि तदा त्वत्सन्निधौ सन्नद्धोऽस्मि, मामनाथां त्यक्त्वा निर्गतो बाल इति मा चिन्तयेति शंकरो मातरं सान्त्वयित्वा स्वबान्धवानपि तथा सम्बोध्य तस्यास्तेषां चाज्ञां लब्ध्वा दूरतो गन्तुमियेष। ततः प्रस्थितः स नदीतीरे देवालये स्थितस्य भगवतः कृष्णस्याशरीरिणीं तरंगैर्नदी मा ताडयति नेह वस्तुं क्षमे इत्येवंविधां वाचं श्रुत्वा तां मूर्तिं भुजाभ्यां प्रोद्धृत्य निर्बाधे प्रदेशे स्थापयित्वा प्रणम्य प्रतस्थे। वनमध्याच्चरन्नर्मदातटे श्रीगोविन्दपूज्यपादान् जिगमिषुः केनचिन्मुनिना दर्शितायां गुहायां दूरतो यतीशं दृष्ट्वा प्रणम्य स्तुतिभिस्तुष्टाव। ततस्तच्छ्रुत्वा श्रीगोविन्दपूज्यपादास्तं प्रोचुः—कस्त्वमिति। ततः श्रीशंकर आह—"मनोबुद्ध्यहंकारचित्तानि नाहं श्रोत्रं न जिह्वा न च घ्राणनेत्रम्। न च व्योम भूमिर्न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम्" इति। ततः स तं कार्यार्थमवतीर्णं शंकरं ज्ञात्वा गुहाया द्वारे पुरस्कृतौ स्वौ चरणौ पूजितवतेऽङ्गीकृतस्वशिष्यत्वाय सम्प्रदायपरम्पराप्राप्तं तत्त्वमसीत्यादिश्रुतिवाक्यैरद्वैतं ब्रह्मतत्त्वमुपदिदेश। अथैकदा श्रीशंकरो नर्मदापूरघोषेण गुरूणां समाधिविघ्नं ध्यायंस्तत्सलिलं कमण्डलूदकेन

सम्मोह्य सर्वं तन्नदीसलिलं स्वकमण्डलौ न्यवेशयत्। वृत्तान्तमिमं लोकमुखादाकर्ण्य श्रीगोविन्दयतयः परं हृष्टास्तमूचुः-"शारदाकाशवत्त्वं भातं ते स्वधियाऽनया", तदधुना काशीं गत्वा तत्र तत्त्वं मुमुक्षुभ्यो बोधयंस्तिष्ठ, पुरा हिमाचले मुनिसंसदि श्रीमद्व्यासो वेदान्तं शशंस, तदा मया पृष्टं भगवंस्त्वया सर्वे वेदा विभक्ताः, महाभारतं कृतं, ब्रह्ममीमांसा निर्मिता । योगभाष्यं रचितं, केचित्तेषां वादेऽर्थमन्यथा कलयन्ति, 'तस्माद् भाष्यं भवता कर्तव्यम्' इति । तदाकर्ण्य श्रीमद्द्वैपायनः प्रत्यभाषत-इममेवार्थमधिकृत्य पुरा दैवतैः पृष्टेन भवेन तदर्थं स्वावतारः प्रतिश्रुतः, 'यः सकलं नद्यम्भः कुम्भे संहरिष्यति स एवावतीर्णः शंकरः वेदान्तभाष्यं करिष्यति ' इति, भिक्षो भवते तदद्य मया तत्त्वज्ञानं बोधितं, जगदुद्धरणार्थं काशीमधिवस, 'तत्र विश्वनाथदर्शनं ते भविष्यति ' इति । ततो गुरोराज्ञया तं प्रणम्य शंकरः काशीं गत्वा गंगायां स्नात्वा विश्वेशमन्नपूर्णां च मनसाभ्यर्च्य स्तुत्वा च तां काशीमध्युवास । ततः कश्चिच्चोलदेशजं पुरः प्रगम्य स्थितं निवेदितस्ववृत्तमाचार्यः शिष्यत्वेन स्वीचकार, यः सनन्दनः पद्मपादाख्यया ख्यातिं गमिष्यति । अन्ये चित्सुखानन्दगिर्यादय एवं शंकरं प्राप्य तत्रैव शिष्यत्वमापुः ।

ततः कदाचित्स्नानार्थं गङ्गां गच्छन्नाचार्यं पथि चण्डालमेकं श्वभिश्चतुर्भिर्वृतं दृष्ट्वा त्यज पन्थानं मा नः स्प्राक्षीरिति प्राह। एवं वदन्तं तं वीक्ष्य स चण्डालः प्रत्यभाषत-'भो दण्डिंस्त्यज मार्गमिति कं भवान्वक्ति देहं वा देहिनं वा ' तदुभयमपि न घटते, यतोऽन्नमयादन्नमयं भिन्नं, कथं त्वयि प्रत्यगात्मनि ब्राह्मणान्त्यजयोर्भेदो नदीसरआदिषु प्रतिबिम्बितसवितृवत्, शरीरेष्वशरीरं सन्तं विस्मृत्य कथ ते मिथ्यैव कलेवरेऽहन्ता, ' मायया महान्तोपि मुह्यन्ति ' इति । ततः स तदुक्तिं निशम्याविक्षुब्धचित्तः शङ्कराचार्य उवाच-' भो ' यत्त्वयोक्तं तत्सत्य, शास्त्रविशारदा बहवः पण्डिताः सन्ति, तत्त्वविदो विरला एव ' इति ततस्तमेव चण्डालं वेदचतुष्टययुक्तं विश्वेश्वरं ज्ञात्वा स्तुतिरस्तौत् । ततस्तुतः स प्रसन्नो भूत्वा ' कर्मठं भट्टभास्करं, मण्डनं, प्रभाकरं, नीलकण्ठं शैवं, गुप्ताख्य शाक्तिकं, चैवमादीञ्जित्वा शिष्यान् कृत्वा च मतमद्वैतं प्रख्यापय ' इति शङ्कर समादिश्यान्तरधात् । तत आचार्यो जाह्नवीं गत्वाद्भिः खानि स्पृष्ट्वा हृदि स्थितमीशं ध्यायन्वेदार्थान्विचारयामास ।

श्रीमच्छंकराचार्यो द्वादशे वर्षे ईश-केन-कठ-प्रश्न-मुण्ड-माण्डूक्यैतरेय-तैत्तिरीय-छान्दोग्य-बृहदारण्यकोपनिषदां भाष्याणि विरच्य तत्रतत्र शिष्यानध्यापयामास । तेषु मुख्यः शिष्यः सनन्दनोऽभूत् । ततः कदाचित्सनन्दनं जाह्नव्या दक्षिणपारे स्थितमुत्तरपारस्था आचार्या आह्वयन् तरणसाधनाभावात्कथं गन्तव्यमिति पर्यालोच्य श्रीगुरुचरणौ ध्यात्वा सनन्दनः गङ्गाप्रवाहं प्राविशयदा तदा जह्नुकन्या पद्मान्यच्चयामासास्यपदोन्यार्सार्थम् । ततस्स तेषु पद्मेषु पदे विनिवेश्य श्रीगुरुसन्निधिमाययौ । ततस्तं प्रीत्याश्लिष्य गुरुस्तस्मै पद्मपादाख्यां ददौ । ततः स आचार्यः कुतर्किणां पण्डितानामद्वैतपरं वेदान्तार्थमाधिक्षिपतां मतानि खण्डयित्वा सर्वास्तान् जित्वा शिष्यांश्चकार । ततः समन्वयाविरोधसाधनफलाख्याध्यायचतुष्टयोपेतस्य ब्रह्मसूत्रस्य ( =शारीरिकमीमांसाशास्त्रस्य=उत्तरमीमांसाशास्त्रस्य ) भाष्यमकरोत् ।

कदाचित्काश्यां शारीरकभाष्याध्यापनसमये वृद्धब्राह्मणरूपेणागतो व्यास उवाच–त्वत्कृतशारीरकभाष्ये कस्याप्येकस्य सूत्रस्य व्यासाशयं वर्णयेति । ततस्तदाऽऽचार्यः "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम्" ( व्या० सू० ३ । १ । १ ) इति सूत्रार्थं वर्णयामास । ततस्तं श्रुत्वा नायं व्याससम्मतोऽर्थः किंतु प्रकारान्तरेणेति ब्राह्मणोऽन्यथा यमर्थं वर्णयामास सोऽर्थः श्रुतिविरुद्ध इत्यसकृत्प्रत्यपादि भाष्यकृता । ततः पद्मपादशिष्योक्त्यैनं व्यासं ज्ञात्वाचार्येण स्तुतो व्यास एनमाचार्यं तद्भाष्याणि च प्रशशंस । दैवयोगेन जन्मसिद्धमाप्ताष्टायुषां ततः स्वमातृकृतागस्त्यादिप्रार्थनया प्राप्ताष्टायुषां चेत्येवं षोडशायुषामन्तिमदिवसान्त्यभागे तत्र मणिकर्णिकायां शरीरपरित्यागे प्रवृत्तायाचार्याय भगवान्बादरायणः लोके प्रवृत्तानां मतान्तराणां वादेन निरासपूर्वमद्वैतशास्त्रप्रचारं निर्वर्त्य शरीरं त्याज्यं नान्यथेति तदुक्तमङ्गीकृतवतेऽस्मै पुनः षोडशायूंषि दत्त्वान्तर्दधौ। ततो दिग्विजयार्थं काश्याः प्रस्थितोऽयमाचार्यः प्रयागे त्रिवेण्यां स्नानादिकर्माणि निर्वर्त्य नास्तिकमतप्रवृत्तान्निर्जित्य स वैदिकमार्गप्रतिष्ठापकत्वेन प्रसिद्धं प्राभाकरादिशिष्यपरिवृतं तुषाग्नौ प्रविष्टमनेकसोमयज्ञहविर्यज्ञसंस्थाभिरुत्तरक्रतुभिश्च प्रीणितेन्द्रादिदेवगणं भाट्टरहस्यादिग्रन्थकर्तृत्वेन प्रसिद्धिं गत्वा तेन सत्कृतस्तत्प्रार्थनया तस्मै स्वकृताद्वैतभाष्यग्रन्थान् श्रावयामास तेनातीव स तुतोष। ततस्तुषाग्निप्रवेशे कारणमाचार्यस्तं पप्रच्छ । बौद्धमतनिरासार्थं तदीयग्रन्थाध्ययनसमये वेदनिन्दां श्रुत्वा सभायामश्रूणि पातयन्तं मां दृष्ट्वाऽयं ब्राह्मणोऽस्मद्विरुद्धपक्षीय इति मां बौद्धाः सौधाग्रात्पातयामासुः, तदाहं 'वेदाः प्रमाणं चेन्न मे क्वापि क्षतिः स्याद्' इति ब्रुवन्वृक्षात्पुष्पमिवाबाधितशरीरोऽपतं तथापि चेदिति पदप्रयोगेण सन्देहसूचनादेकेनाक्ष्णा काणोऽभूवम् । वैदिकमतविरुद्धबौद्धग्रन्थाध्ययनबौद्धग्रन्थाध्यापकगुरुद्रोहाभ्यां जातस्य पापस्य नाशाय तुषाग्निप्रवेशेन प्रायश्चित्तमनुतिष्ठामि, साक्षाच्छिवस्वरूपस्य तव दर्शनेन कृतार्थोस्मि, भाष्यस्यास्य वार्तिकं कृत्वा यशो लब्धुमिच्छामि चेत्याचार्यं स व्यज्ञापयत् । तत आचार्य उवाच–'सौगतादीनामसाधूनां विनाशाय शिक्षणाय वा षडाननस्त्वं भट्टपादरूपेणाविर्भूयैवमकरोरतस्त्वमपापी' इति । तच्छ्रुत्वाहमपापीति त्वदुक्त्याबोधितोऽप्यारब्धप्रायश्चित्तस्य त्यागो लोकविद्विष्टत्वान्न युज्यते मह्यमद्वैतात्मतत्त्वमुपदिश येनाहं मुक्तः स्याम् । कर्ममार्गस्य प्राधान्येन प्रवर्तकमतीव प्रसिद्धं दुर्वाससः शापेन मनुष्यरूपायाः सरस्वत्याः पतिं मण्डनमिश्रं पण्डितं वादेन विजित्य तेन भाष्यस्यास्य वार्तिकं कारयेति भट्टपाद आचार्यं व्यजिज्ञपत् । ततस्तस्मै अद्वैतात्मतत्त्वमुपदिदेश । तेन स मुक्तोऽभवत् ।

तत आचार्यो योगबलेन व्योममार्गेण सशिष्यो नर्मदातटे माहिष्मतीं पुरीं गत्वा तत्र तद्गृहं विचार्य कपाटपिनद्धस्य गृहस्याङ्गणं व्योम्नैव गत्वा स्वपितृश्राद्धे जैमिनिं व्यासं च निमन्त्र्य भोजनार्थमर्चयन्तं तं कर्मठमपश्यत् । सोऽप्येनमपश्यत् । तयोर्विचित्राणि प्रश्नोत्तराण्यभवन् । यदा क्रुद्धोऽयं मण्डनमिश्रस्तेन सह दुर्भाषणं कर्तुमारभत तदा व्यासेन दुर्भाषणान्निरुद्धो यतिरूपं साक्षाच्छिवमेनं न्यमन्त्रयत् । तदाचार्येण नाहमन्नभि-

( १ ) सकलमतनिबर्हणानन्तरं मणिकर्णिकातीरे निदिध्यासनलालसस्य श्रीशंकरस्य वृद्धब्राह्मणरूपेण व्यासदर्शनमिति, तथा विवादकाले वृथाजल्पं कृतवतो वृद्धब्राह्मणवेषस्य व्यासस्य श्रीशंकरेण कपोलयोस्ताडनं कृतमिति चानन्दगिरीये शंकरदिग्विजये ।

क्षार्थमागतस्त्वं किंतु वादभिक्षार्थमागतः, परस्परं पराजये परस्परमाश्रमव्यत्ययः कार्य इत्युक्तः स च आरभ्य मध्याह्नसमये वादोस्त्विति निश्चित्य तान् भोजयामास । स्वयं शिष्टं कर्म समाप्य मण्डनमिश्रोपि भुङ्क्ते स्म । ततो व्यासजैमिनी माध्यस्थ्य सरस्वतीं स्थापयेत्युक्त्वाऽगच्छताम् । यदा परेद्युर्मध्याह्ने सभायां कर्मब्रह्मवादिनोः कर्मब्रह्माद्वैतविषये वाद आरब्धस्तदा माध्यस्थ्ये स्थितया सरस्वत्याभयोः कण्ठे एकैकां पुष्पमालामामुच्य यस्य माला म्लास्यति स पराजित इति ज्ञेयमिति समयं कृत्वा पाकाय महानसं सरस्वती प्रविवेश । एवं वादो यावद्भूत्तावत्प्रत्यह भिक्षार्थमागच्छत्याचार्य भोजनार्थमागच्छेति पति चाहूयोभयोर्भिक्षाशने अदात् । एवं विवदतोः सप्तमे दिवसे सरस्वती मण्डनमिश्रगलस्थया मालया म्लानयाऽऽचार्येण पराजितं मण्डमिश्रं निश्चित्य पाकोत्तरमुभावपि भिक्षार्थमागच्छतामिति हर्षेणाकारयामास । ततस्तयोर्भिक्षोत्तरमाचार्य प्रणम्य तां त्वया दुर्वाससः शापेन मानुषभावान्मोचितेत्युक्त्वा ब्रह्मलोकं जिगमिषुं ता वनदुर्गामन्त्रेणास्तम्भयत् । मण्डनमिश्राय मुमुक्षुणा विद्योपलब्धिपर्यन्तं चित्तशुद्धिसंपादकत्वेन श्रौतानि स्मार्तानि च कर्माणि कार्याण्येवेति जैमिन्याशयं प्रकाशयामास । जैमिनिरपि मण्डनमिश्रेण ध्यात आगत्याचार्योक्तमेव व्याजहार । एवं शरणमिति शरणागतं वीक्ष्य मण्डनमिश्रं तदर्धाङ्गी मामविजित्य कथं मत्पतिर्जितः स्यादित्युक्तेनाचार्येण सह सा वादमारभत । वादेनाजय्यं तं ज्ञात्वा कामशास्त्रीयप्रश्नैनैनं जेष्यामीति निश्चित्य तत्र प्रश्नांश्चकार । तत आचार्यो मासात्परमुत्तरं दास्यामीत्युक्त्वा शिष्यान्यावदागमं स्वदेहरक्षणे नियोज्य स्वकलेवरं गिरिगह्वरे संस्थाप्य मृतस्यामरुकराजस्य कलेवरं योगबलेन प्राविशत् । ततस्तत्पत्नीमन्त्रिप्रभृतयो राजानं लब्धसंज्ञं ज्ञात्वा तं माङ्गलिकवाद्यैः सौधं निन्युः । क्रमेण कामशास्त्रीयविषयाननुभवन्तं राजकार्यादिष्वतीव चतुरं तं ज्ञात्वा नायं प्राक्तनो राजा किं तु कोपि महागुणाकरो योगी परकायप्रवेशविद्यायास्मद्राजशरीरं प्रविष्टः क्वापि स्थापितं स्वदेहं पुनर्गच्छेच्चेन्महती हानिरस्माकं तदा स्यात्, तस्मात्तद्देहनाशायाऽस्माभिर्यतितव्यमिति निश्चित्य यत्र क्वापि मृतशरीरं यद्यद् दृश्यते तत्सर्वं तद्दैव दाह्यमेवेत्याज्ञाप्य नानादिक्षु वै भटान् प्रेषयामासुः । 'मासे च व्यतीते आचार्यं प्रत्यागमनमकुर्वाणेऽस्मासु कैश्चिच्छरीरमेवद्रक्षणीयं कैश्चित्तत्परिमार्गणाय गन्तव्यमिति निश्चित्य कौश्चिद्देहरक्षणाय नियोज्य पद्मपादादयः कर्णाकर्णिकयाऽमरुकराजं मृतं प्राप्तसंज्ञं प्राक्तनविलक्षण लिलादसम्पन्नं लोकमुखाच्छ्रुत्वा तत्र गायकवेषेण राजसभां प्रविश्याद्वैतब्रह्मप्रतिपादकानि पद्यानि गायन्तो राजानं ज्ञातस्वागमनं ज्ञात्वा प्रतिनिववृतिरे । तस्मि॑-न्स्वस्वत्र लब्धमृतमानुषशरीराणि दग्ध्वादग्ध्वा तच्छरीरं लब्ध्वा दग्धुं प्रवृत्तैः सह युध्यमानास्तच्छिष्यान्वलाद् दूरीकृत्य दह्यमानं स्वकलेवरं दृष्ट्वा नृहरिं तुष्टावाचार्यः । तेन तुष्टः साग्निं तं नीत्वाऽन्तर्दधे ।

ततो मण्डनमिश्रः परकायप्रवेशेन कामशास्त्रीयविषयनं ज्ञात्वाऽऽवां त्वया जितावित्यवदत् । सरस्वती निजं धाम यास्यन्तीमाचार्यः सरस्वतीं त्वां ब्रह्मणः पत्नीं जाने, त्वं लोकोपकृतयेऽस्मदीपे स्थाने निवसन्त्यद्वैतमतद्वेष्टॄन्विजित्याद्वैतसिद्धान्तान्प्रकाशयेति प्रार्थिता सत्योमित्यूरीकृत्य निजं धामागच्छत् । ततो मण्डनमिश्रस्त्रिंशत्तमे विक्रमशके संन्यासग्रहणेनाचार्यस्य शिष्योऽभवत्तत्त्वमस्यादिमहावाक्योपदेशादिभिः सह । ततो योगबलेनातिशान्त-

चित्तः स्वात्मारामः ( ७२९ ) पञ्चविंशत्युत्तरसप्तशतीवर्षाणि भुवि वसति स्म । तत आचार्यः स्वात्मारामेषु सुरेषु यतो भवान् श्रेष्ठोऽतस्त्वं सुरेश्वरनामासीत्युवाच । सोप्याचार्येण सहैव दिग्विजयायागच्छत् । त्रिवलिक्षेत्रे मूकाम्बादर्शनायागतमाचार्यं योगिनं श्रुत्वा प्रभाकरो नाम धनिकः स्वपुत्रमतिजडमाचार्यसमीपं निनाय तदाचाचार्यस्तं ब्रह्मैकनिष्ठं ज्ञात्वा कस्त्वमित्यपृच्छत् । तेन जन्मान्तरार्जितोपासनाबलेनाचार्यसान्निध्यवशेन च ब्रह्मैवाहमस्मीत्यादिरूपेण हस्तामलकवत्सत्तत्त्वे निरूपिते तमाचार्यो नाम्ना हस्तामलकमकरोत् । सोऽपि स्वयमाचार्यशिष्योऽभवत् । ततः पुत्रमेनमाचार्ये समर्प्य पुत्रप्रभावज्ञः प्रभाकरः स्वगृहं ययौ ।

स ततः सर्वैः शिष्यैः सह शृङ्गगिरिं प्राप्य तत्र भाष्याण्यध्यापयामास । एकदा गिरिनाम्नः कस्यचिच्छिष्यस्य भाष्याध्यापनायागमनं प्रतीक्षति तस्य भाष्यार्थग्रहणशक्त्यभावेन तत्प्रतीक्षा व्यर्थेति पद्मपादस्य गर्वोक्तिं श्रुत्वा स मनसा तस्मै चतुर्दश विद्या अनुजग्राह । तेनागमनसमय एवातीव हृष्टो जीवब्रह्मैक्यविषयैस्तोटकवृत्तैराचार्यमुपतस्थे । ततः पद्मपादादयो हृष्टास्तं प्रशशंसुः । सोपि तेन हेतुनाऽऽनन्दगिरिस्तोटकाख्योऽभवत् , यः ब्रह्मसूत्रोपनिषद्भाष्याणां व्याख्यानानि कुर्वित्याचार्येण नियुयुजे ।

ततः स आचार्य एकदा सुरेश्वरप्रार्थनया तं भाष्यवार्तिकनिर्माणे नियोजयामास । तच्छ्रुत्वा चित्सुखाचार्यप्रभृतिभिः शिष्यैः कर्मठेन तेन कृतं भाष्यवार्तिकं श्रीमच्छिष्यस्यापि त्वद्भाष्यानुगुणमेव स्यान्न तदनुगुणमिति जैमिनेः कृतिवत्कर्मठानामेवोपयुज्येत न मुमुक्षूणामिति सनन्दन आनन्दगिरिर्वा नियोज्यतामित्यूचे । पद्मपादेन हस्तामलको नियोज्यतामित्यूचे ।

अपत्येन सह नद्यां स्नानार्थमागतायै कस्यैचित्स्वस्य शिशुं तत्र तपस्यतोऽङ्के उपवेश्य स्नात्वा प्रत्यागत्य तदङ्कात्पतित्वा मृतं तं शिशुं दृष्ट्वा रुदन्त्यै स्वयं मृतशरीरे प्रविश्य हस्तामलकाचार्यो जीवयित्वार्पयद्यो हस्तामलकः पूर्वजन्मन्येव तपश्चर्याभिः सिद्धो विरक्तो न ग्रन्थरचनारूपे प्रवृत्तिमार्गे प्रवृत्तः स्यादिति पद्मपादमाचार्य उवाच—त्वया कर्मठेन वेदान्तविषये करिष्यमाणे वार्तिकेऽभिरुचिर्नेपामिति त्वया सूत्रभाष्ये वार्तिकं न कार्यं किं त्वद्वैतब्रह्मपरं कंचन नैष्कर्मगोचरं नैष्कर्म्यसिद्ध्याख्यं ग्रन्थं निर्माय्यैभ्यः प्रदर्शयेति गुरुणाज्ञप्तेन सुरेश्वराचार्येण नैष्कर्म्यसिद्ध्याख्यो ग्रन्थो व्यरचि । सोयं तेन स्वस्यापि कर्मठत्वनिरासकः प्रादर्शि चाचार्यादिभ्यः । ते तमेनं दृष्ट्वातीव चित्रितहृदयाः परं प्रशशंसुः । तत आचार्येण मण्डनमिश्रो बृहदारण्यकोपनिषद्भाष्यस्य तैत्तिरीयोपनिषद्भाष्यस्य च वार्तिकं कुर्वित्याज्ञप्तस्तद्द्वयं कृत्वा तस्मै प्रदर्शयामास । योऽसौ वाचस्पतिमिश्रो भविष्यति प्रारब्धकर्मणा सोऽयं मण्डनमिश्रस्तत्स्पृष्ट्वाऽऽचार्यमतीव तोषयामास ।

पद्मपादाचार्येण ब्रह्मसूत्रशाङ्करभाष्यव्याख्या चक्रे । तत्र द्वितीयाध्यायप्रथमपादशांकरभाष्येण सहिते प्रथमाध्यायसूत्रशांकरभाष्ये पञ्चपादाः प्रचरेयुः, तत्रापि चतुःसूत्र्येव प्रसिद्ध्येदित्याचार्योक्त्या तावत्येव व्याख्याऽऽचार्येण श्रुता पञ्चपादिकेतिनाम्ना प्रसिद्धास्ते चित्सुखादयोप्यद्वैतब्रह्मपरग्रन्थान्कृत्वाऽऽचार्यं संप्रार्थ्य तदाज्ञया तीर्थक्षेत्रादिकान्ययुः ।

( १ ) तन्नामान एव पञ्चविंशत्युत्तरसप्तशतीवर्षेष्वभूवन् यथा गौडपादाचार्यावधि व्यासपरम्परा शुकाचार्यपरम्परा वा ।

एवं शृङ्गगिरौ निवसन्नाचार्यः स्वमात्रा कृतं स्वस्मरणं योगेन ज्ञात्वा देशान्तरे सुदूरे स्थितया अपि मातुः समीपं योगबलेन प्राप्य प्रणनाम । सापि चिरात्प्राप्तं तं समीक्ष्यातीव तुतोष । तत आचार्यो मातरं प्रणम्य किमपेक्ष्यत ऐहिकमामुष्मिकं वेत्याचार्यस्य वाचं निशम्य जीर्णशरीरस्य धारणे नाहं शक्तास्मि, तत एतच्छरीरं यथाशास्त्रं संस्कृत्य स्वर्ग प्रापयेत्युक्तो महेशं तुष्टाव। ततो महेशस्तुष्टस्तदाशयं ज्ञात्वा पार्षदांस्तन्मातुरानयनाय प्रेषयामास। तां दृष्ट्वा वैकुण्ठमेव गन्तुकामां तां ज्ञात्वा शैवपार्षदाननुज्ञाप्य स हरिं तुष्टाव। तेन तुष्टो हरिः स्वयमागत्य प्रणतं यतिवरं दृष्ट्वा 'भूतले त्वत्कृताः सूत्रभाष्यादिका अद्वैतग्रन्था लोकेरङ्गीकृताः, ब्रह्मलोकेपि सिद्धेषु ते सर्वे प्रसिद्धिमुपयान्तु, त्वन्माता मया सहैव दिव्यं रूपमास्थाय वैकुण्ठमागच्छतु' इत्याचार्यं प्रशस्य तया सह विमानेन वैकुण्ठं जगाम। ततो बन्धुभिराहूतैरन्यैश्च तत्रत्यैर्ब्राह्मणैरज्ञातशास्त्रमर्यादैर्यतेर्मातुः संस्कारेऽधिकारो नेति धिक्कृतस्तेभ्यस्तदर्थमग्निमप्यलब्ध्वा काष्ठानि नदीतीरे सञ्चित्य स्वबाहुं प्रमथ्याग्निमुत्पाद्य मातुः शरीरं प्रदाह्य तान्—"इत आरभ्य यूयं वेदबाह्या वह्निसंस्कारशून्याः संन्यासिनां भिक्षादाने योग्या न भवत, शूद्राचाराश्च भवत" इति शप्त्वा योगबलेन शृङ्गगिरिं जगाम।

ततः सनन्दनो गुरोरनुज्ञया स्वात्मानन्दमनुभवन्नेव तीर्थयात्रां कुर्वाणो दक्षिणस्यां दिशि कालहस्तिक्षेत्रं गत्वा तत्र जलाशये स्नात्वा साम्बं प्रणम्य काञ्चीं गत्वा ततः शिवकाञ्च्यामेकाम्रेश्वरं विष्णुकाञ्च्यां वरदराजं च प्रणम्य पुण्डरीकपुरं (=पण्डरपुरं) गत्वा तत्र शिवेन नृत्यन श्रान्तोऽस्म्यत्रैवैहि गङ्गे इत्याह्वानमात्रेण तत्रागतायां शिवगङ्गेति नाम्न्यां प्रसिद्धायां गङ्गायां स्नात्वा शिवं सम्पूज्य ततो रामेश्वरं जिगमिषुः कावेर्यां स्नात्वा स्वमातुलं दिदृक्षुः शिष्यैः सह तद्गृहं गत्वा कुशलप्रश्नादिसंलापैः मातुलं तोषयामास। स मातुलो भागिनेयाय भिक्षां दत्त्वा तच्छिष्यानपि भोजयित्वा स्थितस्तच्छिष्यान्पार्श्वे स्थितं पुस्तकं दृष्ट्वा *कोऽयं ग्रन्थ इत्यपृच्छत्। ते चायं ग्रन्थः, पद्मपादाचार्येण त्वद्भागिनेयेन* कृता श्रीमच्छंकरभगवत्पादपूज्यरचितब्रह्मसूत्रभाष्यस्य टीकेत्यवदन्। ततः पद्मपादस्तां दिदृक्षवे तस्मै तामदात्। मातुलस्तं ग्रन्थं दृष्ट्वा तत्र श्रुतिस्मृतियुक्तिभिः खण्डितं प्राभाकरमतं ताभिरेव स्थापितं, जीवब्रह्माद्वैतं च पर्यालोच्य तदसहमानः कापट्येन प्रीतिं प्रदर्शयन्नेव त्वत्प्रत्यागमनपर्यन्तमेतत्पुस्तकमस्तु, तत एनं नय, तावदहं पर्यालोचयामीत्यब्रवीत् । तथेति पद्मपादस्तस्मै तत्पुस्तकं दत्त्वा रामेश्वरं श्रीरामसेतुं च गत्वा श्रीरामसेतुं श्रीरामेश्वरं श्रीरामं च नत्वा ततो यात्राक्रमेण प्रतिनिवृत्य मातुलगृहमागमिष्यंस्तत्र मार्ग एव तद्गृहं तत्पुस्तकं च दग्धं श्रुत्वा मातुलं गत्वा गृहदाहेन न मे दुःखं तत्पुस्तकदाहेन यद्दुःखं तन्न शाम्यतीति तदुक्तिमसहमानोऽपि शान्तचित्तत्वाद्दग्धं चेत्तद्गच्छतु पुनरपि तादृशं ग्रन्थं करिष्यामीति तमब्रवीत्। ततो मातुलः पुनरयं तं ग्रन्थं करिष्यत्येव तेनास्मद्गुरोः प्रभाकरस्य मतं निर्नाम भवेदेवेत्यालोच्य बुद्धिमान्द्यकरं द्रव्यं तद्दिने तस्मै भिक्षार्थमदात्। ततः पद्मपाद (=सनन्दनः) स्तेन बुद्धिमान्द्यं जानंस्ततः श्रीगुरुं द्रष्टुं केरलानगच्छत्। श्रीगुरुरपि तदैव केरलानगच्छत्। तत्र स तं प्रणनाम। ततस्तयोः कुशलप्रश्नानन्तरं पद्मपादः स्वग्रन्थदाहं स्वबुद्धिमान्द्यं च तस्मै विज्ञापयामास। ततः श्रीगुरुणा पूर्व स्वेन श्रुतं पञ्चपादिकामागमाग्रमन्ववदत्। तेन यथाश्रुतमानुपूर्व्येणोक्तं पद्मपादो विलिलेख तुतोष

च । तथा राजशेखराख्येन राज्ञा स्वकृतं नाटकत्रयं यत्पूर्वं स्वस्मै श्रावितं ततः पश्चाद्दग्धं चाभूत्तदिदं नाटकत्रयं दर्शनार्थमागतस्य तद्राजस्य कुशलप्रश्नानन्तरं प्रार्थनयाचार्यैः यथाश्रुतमन्ववादि । तेनानूदितं तत्स राजा लेखकेन लेखयामास । श्रीमतः शंकरभगवत्पादस्य तदिदं सर्वं सर्वेषामत्याश्चर्यवहमभूत् । ततोऽनेन राज्ञा तं कां सेवां करिष्यामीति प्रार्थयामास । कालटीनामकेऽग्रहारे मया यथा ब्राह्मणाः शप्तास्ते तथैव वेदाग्निबहिष्कृता यतिभिक्षादानायोग्याश्च स्थापनीयास्त्वयेति स तमाज्ञापयामास । स तं प्रणम्य तथास्त्वित्युक्त्वा स्वनगरमयात् ।

ततः श्रीमच्छंकरभगवत्पादः शिष्यैः सुधन्वराजस्य पुरं गत्वा तेनार्चितो लोके भ्रष्टस्य वैदिकमार्गस्य पुनः प्रवर्तने यतमानाय मह्यं त्वया सार्धं कार्यमित्युक्तिं श्रुत्वा तथास्त्विति प्रतिश्रुत्यानुगच्छता तेनानुगतो रामेश्वरं गच्छन्पथि मद्यलोलुपान् शाक्तान् जित्वा रामेश्वरादिकं प्राप्य रामनाथादीन् प्रणम्य चोलद्रविडपाण्ड्यकाञ्चीवेङ्कटाद्रिगतान्वैदिकमार्गभ्रष्टान् जित्वा ततः कर्नाटदेशं गत्वा वेदबाह्यान्कापालिकान् जेतुं प्रवृत्ते ततश्च क्रकचनामा कापालिक आचार्यमागत्य भैरवार्चां विहाय न कदाचिन्मोक्षः स्यादित्येवं स्वपक्षमाचार्येण श्रुतिप्रमाणादिना खण्डितं नाङ्गीचकार । ततस्तं तद्देशाधिपत्यात्स राजा निष्कासयामास । ततः स बहुभिर्ब्राह्मणैः स्वानुयायिभिरन्यैः कापालिकैस्त्रिशूलोद्यतकरैर्युद्धे प्रसक्तो बभूव । ततो राज्ञा केचन गृहीताः केचन निर्मूलिताः । ततः शिष्टा गृहीताश्च तन्मतस्वीकारपूर्वकमाचार्यं शरणं प्रापुः । तेषु ये विप्राणां हननोद्यता आसंस्तान्हुङ्कारेण स भस्मसाच्चकार । ततः स क्रकचः स्वपराभवमसहमानः कपालधारी पीतमदिरो भैरवं नेत्रे निमील्य दध्यौ । स ध्यानमात्रेण सन्निहितं भैरवं जह्येनं भिक्षुमित्यवदत् । स भैरवो यद्रूपे शिवावतारे त्वया बह्वपराद्धमित्युक्त्वा तच्छिरोऽच्छिनत् । तत आचार्येण स स्तुतोऽन्तर्दधे । ततस्तेभ्योऽप्यद्वैतात्मतत्त्वमुपदिश्य गोकर्णक्षेत्रं गत्वाम्बुधौ निमज्ज्य गोकर्णेशं प्रणम्य तत्रैव स्वकृतं सूत्रभाष्यादिकं तदधिकारिभ्य उपदिशन्नासीत् । ततस्तत्र स्वशिष्येणोक्तः शैवो नीलकण्ठाचार्यो बहुभिः शिष्यैः सहाचार्यं वादेन जेतुमाजगाम । ततः स वादे तन्मतं खण्डयित्वा तस्मै वैदिकमद्वैतात्मतत्त्वमुपदिदेश । स्वभाष्याणि प्रचार्य तत्रतत्रैवं स गुर्जरसौराष्ट्रादिदेशादौ वेदमार्गं प्रवर्तयामास । ततो द्वारवतीं गत्वा स पाञ्चरात्रानुयायिनो वैष्णवाञ्जित्वा श्रीकृष्णस्य पूजा परं कार्यैवेत्युपदिश्य स्वभाष्याणि प्रचार्य ततोऽवन्तीं गत्वा महाकालेश्वरं प्रणम्य तत्रैव देवालये तत्राचार्यत्वेन प्रसिद्धं पद्मपादाह्वमागतं द्वैतमतानुसारेण ब्रह्मसूत्रवृत्तिकृतं बहुशिष्यं खण्डितकाणादकापिलमतसिद्धान्तं प्रणम्य स्थितं भट्टभास्करं स वेदान्तसूत्रैः स्वीयद्वैतमतनिरूपणाय प्रेरयामास । ततस्तेनोक्तानां श्रुतिविरुद्धार्थानां खण्डनेन तं तथा तत्रैवागतमर्हन्नामानं नास्तिकं ततः पारदान्देशान् गत्वा तत्र प्रसिद्धं हर्षमिश्राख्य विद्यामदोद्धतं, ततः कामरूपं गत्वा तत्र शक्तिसूत्रभाष्यकारमभिनवगुप्तमाचार्यं,ततः कोसलान्, ततो गौडदेशे मीमांसानिपुणं कर्मठं मुरारिमिश्रं,नानाशास्त्रज्ञं धर्मगुप्तं,न्यायशास्त्रज्ञमुदयनाचार्यं च विजित्य तत्रतत्र ब्रह्माद्वैततत्त्वज्ञानसम्पादकानि स्वभाष्याणि प्रचारयामास ।

स्वमतपरित्यागमनिच्छन्नभिनवगुप्त आचार्ये कृत्याप्रयोगेण ( आभिचारेण ) भगन्दरं रोगं प्रापयामास । स तं शिष्यप्रार्थनया भिषग्भिराचार्यसंस्मृतामरेन्द्रप्रेषिताभ्यामश्विभ्या-

मप्यनिवार्य तथाभिनवगुप्तप्रयुक्ताभिचारमार्तं विज्ञाय नृसिंहमन्त्रजापेन तं भ्रोत्सार्य गंगातीरे व्योम्नोऽवतरन्तं ब्रह्म ध्यायन्तं गुरोरपि गुरुं श्रीगौडपादाचार्यं दृष्ट्वा ननाम। ततो गौडपादाचार्य आह-गोविन्दभगवत्पादमुखात्त्वया कृतानि सूत्रोपनिषद्गीताभाष्याणि श्रुतानि, त्वया कृतस्य मत्कृतमाण्डूक्यवार्तिकभाष्यस्य श्रवणायागतोऽस्मीति। ततः स तं सर्वाणि सूत्रोपनिषद्गीतामाण्डूक्यवार्तिकभाष्याणि श्रावयामास। तेन तुष्टः स वरमात्मानन्दानुभवरूपं तस्मै दत्त्वान्तर्दधे। ततः काश्मीरमण्डलं गत्वा सरस्वतीमन्दिरस्य दक्षिणेन द्वारेण प्रविश्य निरुन्धतो (=प्रतिषेधतः) विदुषो वादेन विजित्यान्तर्गृहं शिष्यैः सह प्रविश्य भद्रासनमारुरुक्षत्याचार्येऽशरीरवाण्याविर्बभूव–'पीठारोहे सर्वज्ञत्वं न कारणं किन्तु शुद्धाचरणमपि, तत्त्वयि नास्ति–यतस्त्वया परकायप्रवेशेन पराङ्गनोपभुक्ता, एतद्दिव्यभद्रासनं सतां सिद्धानामारोहणाय योग्यम्' इति। तां श्रुत्वा यतीन्द्रेण 'नायं देहोऽशुद्धः येन देहेन तत्कृतं तत्तद्देहस्यैवाशुद्धतापादकं नान्यस्य देहस्य। अन्यथा केनचिच्छूद्रेण प्राग्जन्मनि कृतेन केनापि पुण्यविशेषेण विप्रजन्मलाभेपि वेदाधिकारो न स्यात्'इत्यादिकमुक्तमाकर्ण्य शारदा तूर्ष्णीबभूव। ततः स दिव्यभद्रासनमारुरोह। तन्मण्डलस्थान्पण्डितान्छैवसम्प्रदायप्रवर्तने नियोजयामास च। ततः स कैश्चिद्विद्वद्भिः सह शृङ्गगिरिं (शृंगेरीं) प्राप्यद्वितभाष्याण्यध्यापयन्नास्ते स्मास तत्र शीतार्दितांतान्दृष्ट्वा शङ्करं सम्प्रार्थ्य तदनुमहेणोष्णोदकं तं देशं प्रापयामास।

ततो दिक्षु चतुर्षु चतुरो मठान्निर्माय तत्पीठे पद्मपादादिकाञ्छिष्यान्प्रतिष्ठापयामास। शैवपूजाविमुखान्स्वयं बहिर्गताञ्छिष्यान्दूरीकृत्य तस्यै बिम्बाम्बायै कन्यायै अविवाहितायै सिद्धिसम्पन्नायै ब्राह्मण्यै या मूकाय ब्राह्मणपुत्राय महामन्त्रमुपदिश्य पण्डितमकरोत् मूर्तिपूजादिकं तपश्चर्यादिकं चोपदिदेश। एवं कृतकृत्य आचार्यो द्वात्रिंशे वयस्यतीते ब्रह्मादिभिर्यतीशं कृतकार्यं कैलासं नेतुमागतैर्बोधितो त्रिनेत्रादिमता निजेन रूपेण विमानमारुह्य कैलासं जगामेति शिवम्।

इदं चरित्रं नकस्यैव श्रीशंकराचार्यस्य किन्तु प्रस्थानत्रयभाष्यकृतः श्रीशंकराचार्यस्य तदधिष्ठिततत्तत्पीठगतानामाचार्याणां तत्तन्नाम्नां चाचार्याणां चरित्राण्येकीकृत्यैव (माधवचिद्विलास–ऽऽनन्दगिरिकृत) 'शंकरदिग्विजयत्रय'–'गुरुपरम्परा'–'भविष्यपुराण'–'संशय तिमिरभास्करा'–'अवतारकालसम्भवपरामर्श'–'श्रीजगद्गुरुसंस्थानशृङ्गेरीमठ'–'श्रीसंस्थानमठ करवीर व सङ्केश्वराचा इतिहास'– 'श्रीमच्छङ्कराचार्यचरित्र'– 'श्रीशङ्कराचार्य मठ हम्पी यांचा जाहीरनामा'– 'शङ्करचरित्रकालविचार'–(करवीरपीठकृत)–'धार्मिकविचाराचें कार्य'–'श्रीमच्छङ्कराचार्यनो समय–' 'श्रीशंकरचरित्र'–शिवरहस्य'–'कूर्मपुराण'–'शिवपुराण'– 'भक्तमाला'–ऽऽदिग्रन्थेषु तथाङ्ग्लभाषामय–'श्रीशङ्कराचार्य–हीज़ लैफ अन्ड टैम्स–हीज़फिलॉसफी'–नामग्रन्थे च वर्णितानीति ज्ञेयमिति दिगिति प्रतिभाति। शिष्टं परिशिष्टे स्फुटीकरिष्यते इति शिवम्॥ इति श्रीमच्छङ्कराचार्यचरित्रं समाप्तम्॥

## तच्चरित्रं प्रकारान्तरेण–

कश्चित्त्वयं श्रीशङ्कराचार्यः य आन्ध्रद्रविडदेशयोः सन्धौ वायुलिङ्गक्षेत्रे (=कालहस्तिक्षेत्रे) केनचिद्ब्राह्मणेन कालहस्तिमहेश्वरदेवालये लब्ध्वा स्फोटितात्कूष्माण्डाल्लब्धः शिशुः शङ्करालये लब्धत्वाच्छङ्करनामा तेनाहूतः 'शङ्करं कुंकुमाभासं मुनिं कूष्माण्डसम्भवम्।

भाष्यकारं स्तुमो नित्यमुद्यद्भास्करसन्निभम्' इति ( कूष्माण्डशङ्करदिग्विजये ) वचनात्। अस्याऽयोनिजत्वेन देवेनैव निर्मितत्वात्पिता शङ्करः माता त्वम्बिकैव । शुकस्यायोनिजत्वव च्छरवर्णोद्भूतस्कन्दवत्सीताथा भूमिजत्ववद् द्रौपदीधृष्टद्युम्नयोरग्निजत्ववद् अगस्त्यस्य कुंभे जन्मवदयोनिजत्वं नानुपपन्नम् । नारदीये श्रीशङ्करकृतवायुलिङ्गस्तुतिरप्यत्र मानमित्युक्तत्वा 'परिगृह्य तनुं भगवद्विमुखांस्तत्पदसम्मुखकरणोद्युक्तः शङ्करयतिराड् वाताधीनो नौरिव यायाज्जडजातभयात्' इति ( नारदीये ) स्वेच्छागृहीततनुत्वोक्तिरप्युपपद्यत इत्युक्तिरपि श्रीशङ्कराचार्यान्तरविषयिणीति न काप्यनुपपत्तिरिति दिगित्याहुः ।

## श्रीमच्छङ्करभगवत्पादाचार्यस्य परकाये प्रवेशः—

श्रीमच्छंकरभगवत्पादाचार्यैः परकायप्रवेशयोगज्ञत्वेन मृतस्यामरुकराजस्य शरीरे प्रवेशो लोकानुग्रहायाकारीत्युक्तं युक्तमेव ।

शरीरान्तश्चित्तबन्धकारणस्याज्ञाने संयमेन तच्छैथिल्यं प्रचारसंवेदनेन च तत्संवेदनं संपादयन्यदाऽऽत्मचित्तं पारशरीरान्निष्कृष्य परशरीरे निक्षेप्तुमिच्छति तदा बन्धकारणशैथिल्यादिप्रतिबन्धं प्रचारसंवेदनाच्च निष्प्रत्यूहमस्य चित्तं स्वशरीरान्निष्क्रामति परशरीरं चाविशति । तदनुसरन्ति चेन्द्रियप्राणादयो राजानं सैनिका इव मातरं शिशव इव स्वयमेव तदुक्तं पतञ्जलिना योगशास्त्रे—'बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः' ( यो० सू० ३।१८ ) इति । 'तस्यायमर्थः—( बन्धकारणशैथिल्यात् )=शरीराभ्यन्तरे चित्तस्य यो बन्धः=बधनं=प्रतिष्ठा=अन्यत्र गतिप्रतिबन्धः=ज्ञानहेतुः सम्बन्धविशेषः तस्य यत् ( कारणं )=कारणद्वयम्=आरब्धं धर्मः, अधर्मश्चेति द्वयं तस्य ( शैथिल्यात् )= 'संयमेन'='धारणया ध्यानेन समाधिना च' बन्धागमत्वात, ( प्रचारसंवेदनाच्च )= प्रचाराणां=प्रचरत्येभिरेभिरिति वा ( प्रचाराः )=चित्तस्य गमनागमनाध्वभूता नाड्यस्तेषां ( संवेदनात् )=सं=संयमेन=धारणया ध्यानेन समाधिना च ( वेदनं )=साक्षात्करणं तस्माच्च ( चित्तस्य)=योगिनः चित्तस्य ( परशरीरावेशः )=स्वशरीरान्निर्गत्य ( परस्य ) = अन्यस्य = जीवतो मृतस्य वा ( शरीरे ) = काये ( आवेशः ) = प्रवेशो भवतीति । श्रुतिरपि—'स त्रिधा भवति पञ्चधा सप्तधा नवधा' इति ( ब्र० सू० ४।४ ) शारीरकभाष्येपि—'सौभरेरभिनिर्मितविविधदेहस्य पर्यायेण पञ्चाशता मान्धातृकन्याभिर्विहारः पौराणिकैः स्मर्यते' इति ( ब्र० सू० शां० भा० ४।४।११ ) अभावाधिकरणे तथा 'अनेकशरीरं सृष्ट्वा तेषु प्रविशति' इति ( ब्र० सू० ४।४।१५,१६ ) इति च । तथा 'ते च केचित्पतिते पूर्वदेहे देहान्तरमाददते' केचित्तु 'स्थित एव तस्मिन्योगैश्वर्यवशादनेकदेहान्' इति ( ब्र० सू० ३।३।३२ ) तथा 'अपान्तरतमःप्रभृतयोपीश्वराः परमेश्वरेण तेषुतेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते, तदवसाने चापवृज्यन्ते इत्यविरुद्धम् । सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येणैव गृहान्तरमन्यमन्यं देहं सञ्चरन्तः स्वाधिकारनिर्वर्तनायापरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वान्निर्माय देहान्युगपत्क्रमेण वाधितिष्ठन्ति । न चैते जातिस्मरा इत्युच्यन्ते—'न एवैते' इति स्मृतिप्रसिद्धेः । यथा 'सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामाऽव्युदस्य स्वं देहं जानकं देहमाविश्य व्युद्य तेन पश्चात्स्वमेव देहमाविवेशेति स्मर्यते' इति च तत्रैव भाष्ये (३।३।३२) उक्तेः परशरीरे प्रवेशः स्वशरीरे प्रत्यागमनं च तद्योगविदां सुलभमेवेति दिक् ।

## अद्वैतिमठाम्नायाः–(मठाम्नायसेतुग्रन्थरीत्या)।

| | आम्नायनिर्देशः | सम्प्रदायः | मठनाम | अङ्कितनाम | क्षेत्रनाम | देवनाम | देवी=शक्तिः | आचार्यनाम | तीर्थनाम | ब्रह्मचारिनाम | वेदः, तद्गतमहावाक्यम् | महावाक्यम् | स्थानम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | पश्चिमाम्नायम् | कीटवारः(लः) | शारदामठः | तीर्थमाश्रमो वा. | द्वारकाक्षेत्रम् | सिद्धेश्वरः | भद्रकाली | विश्वरूपाचार्यः पद्मपाद इति. | गोमती | स्वरूपकः | सामवेदः | तत्त्वमसि | द्वारका |
| २ | पूर्वाम्नायम् | भोगवारः (लः) | गोवर्धनमठः | वनमरण्यं वा. | पुरुषोत्तमक्षेत्रम् | जगन्नाथः | विमलादेवी | पद्मपादः, हस्तामलक इति मतान्त. | महोदधिः | प्रकाशकः | ऋग्वेदः | प्रज्ञानं ब्रह्म | वद्रीजगन्नाथः. |
| ३ | उत्तराम्नायम् | आनन्दवारः (लः) | ज्योतिर्मठः ज्योतिर्म. | गिरिःपर्वतः सागरो वा | बदरिकाश्रमक्षे. | नारायणः | पुन्नगिरि(री) पूर्णगिरि(री) | तोटकः =त्रोटकाचार्यः | अलकानन्दा | आनन्दः | अथर्ववेदः | अयमात्मा ब्रह्म. | बदरिकावनम् |
| ४ | दक्षिणाम्नायम् | भूरिवारः(लः) | शृङ्गेरीमठः शृङ्गगिरिम. | सरस्वती, भारती पुरी वा | रामेश्वरक्षेत्रम् | आदिवराहःमलहानिकरं लिङ्गम् | कामाक्षी =शारदा | पृथ्वीधरः | तुङ्गभद्रा | चैतन्यब्रह्मचारी | यजुर्वेदः | अहंब्रह्मास्मि | शृङ्गगिरि, वा शृङ्गेरी. |
| ५ | ऊर्ध्वाम्नायः | काशी. | सुमेरुमठः | सत्यं ज्ञानं वा | कैलासक्षेत्रम् | निरञ्जनः | माया | ईश्वरः | मानसं ब्रह्मतत्त्वावगाहितम् | ब्रह्मतत्त्वेशयोगेन सन्यासः | सामवेदः | | |
| ६ | आत्माम्नायः | सत्यतापः | परमात्ममठः | योगः | नभस्सरोवरम् | परमहंसः | मानसीमाया | चेतनः | त्रिपुटी | सन्यासः | वेदान्तवाक्यम् | | |
| ७ | निष्कलाम्नायः | सच्छिष्यः | सहस्रार्कद्युतिमठः | गुरुपादुका | अनुभवः | विश्वरूपः | चिच्छक्तिः | सद्गुरुः | सच्छास्त्रश्रवणम् | सन्यासः | | | |

कीटवारादिसम्प्रदायपदविवरणम्।

(टि०)१ कीटादयो विशेषेण वार्यन्ते जीवजन्तवः। भूतानुकम्पया नित्यं कीटवारः स उच्यते ॥ १ ॥ २ भोगो विषय इत्युक्तो वार्यते येन जीविनाम्। सम्प्रदायो यतीनां च भोगवारः स उच्यते ॥ २ ॥ ३ आनन्देति विलासश्च वार्यते येन जीविनाम्। सम्प्रदायो यतीनां चानन्दवारः स उच्यते ॥ ३ ॥ ४ भूरिशब्देन सौवर्ण्यं वार्यते येन जीविनाम्। सम्प्रदायो यतीनां च भूरिवारः स उच्यते ॥ ४ ॥ ५ कालिकामठः [ श्रीरङ्गे मुद्रापितमठाम्नाये ]। ६ श्रीमठ. [ श्रीरङ्गे. मु० ]। ७ शारदामठः [ श्रीर० ]। ८ सरस्वतीपुरीभारत्यरण्यतीर्थगिर्याश्रमसुरानि [ श्री० मु० मठाम्ना० ]। ९ रामक्षेत्रम् [श्रीरङ्गे मु० मठाम्नाये ]। १० वराहः [ श्रीर०मु० ] ११ विमला। १२ सुरेश्वराचार्यः। १३ अलकनन्दा। १४ जीवात्मपरमात्मैक्यवाक्यं तत्त्वमसि च।

## अङ्कितीर्थाश्रमादिनाम्नां विवरणम्-

१ तीर्थम्-'त्रिवेणीसङ्गमे तीर्थे तत्त्वमस्यादिलक्षणे ॥
स्नायात्तत्त्वार्थभावेन तीर्थनामा स उच्यते' ॥ १ ॥

२ आश्रमः-'आश्रमग्रहणे प्रौढ आशापाशविवर्जितः ॥
यातायातविनिर्मुक्त एष आश्रम उच्यते' ॥ २ ॥

३ वनम्- सुरम्ये निर्झरस्थाने वने वासं करोति यः ।
आशाबन्धविनिर्मुक्तो वननामा स उच्यते' ॥ ३ ॥

४ अरण्यम्-'अरण्ये संस्थितो नित्यमानन्दे नन्दने वने ।
त्यक्त्वा सर्वमिदं विश्वमरण्यः परिकीर्त्यते' ॥ ४ ॥

५ गिरिः-'वासो गिरिवरे नित्यं गीताध्ययनतत्परः ।
गम्भीराचलबुद्धिश्च गिरिनामा स उच्यते' ॥ ५ ॥

६ पर्वतः-'वसन्पर्वतमूलेषु प्रौढं ज्ञानं बिभर्ति यः ।
सारासारं विजानाति पर्वतः परिकीर्त्यते' ॥ ६ ॥

७ सागरः-'तत्त्वसागरगम्भीरो ज्ञानरत्नपरिग्रहः ।
मर्यादां नैव लंघेत सागरः परिकीर्त्यते' ॥ ७ ॥

८ सरस्वती-'स्वरज्ञानरतो नित्यं स्वरवादी कवीश्वरः ।
संसारसागरासारहन्तासौ हि सरस्वती' ॥ ८ ॥

९ भारती-'विद्याभारेण सपूर्णः सर्वभारं परित्यजन् ।
दुःखभारं न जानाति भारती परिकीर्त्यते' ॥ ९ ॥

१० पुरी-'ज्ञानतत्त्वेन सम्पूर्णः पूर्णतत्त्वपदे स्थितः ।
परब्रह्मरतो नित्यं पुरीनामा स उच्यते' ॥ १० ॥

-( मठाम्नायसेतौ )

## श्रीमच्छंकराचार्यादिविद्याधर्मपीठाधिपपरम्परागता मठाः ।

( १ ) शारदामठः
( २ ) गोवर्धनमठः
( ३ ) ज्योतिर्मठः
( ४ ) शृंगेरीमठः
( ५ ) सुमेरुमठ'
( ६ ) परमात्ममठः
( ७ ) कूडलीमठः
( ८ ) सङ्केश्वरमठः
( ९ ) सुमेरुमठः ( काश्याम )
( १० ) कुम्भकोणमठः
( ११ ) पुष्पगिरिमठः
( १२ ) विरूपाक्षमठः
( १३ ) हव्यकमठः
( १४ ) शिवगंगामठः
( १५ ) कोप्पालमठः
( १६ ) श्रीशैलमठः
( १७ ) रामेश्वरमठः
( १८ ) रामचन्द्रापुरमठः
( १९ ) आमनो (=अवंति ) मठः
( २० ) घनगिरिमठः

( २१ ) होन्न (=हन ) ( ने ) हळ्ळीमठः
( २२ ) भण्डागरीमठः
( २३ ) कैवल्यपुरमठः
( २४ ) मूल ( मुळ ) वागलमठः
( २५ ) शिरालीमठः
( २६ ) खिद्रापूरमठः सङ्केश्वरे
( २७ ) नृसिंहवाडीमठः
( २८ ) मोळवणमठः
( २९ ) पैठणमठः
( ३० ) भण्डीगरीमठः
( ३१ ) काशीमठः
( ३२ ) तीर्थराजपूरमठः
( ३३ ) गंगोत्रीमठः
( ३४ ) तीर्थहळ्ळीमठः
( ३५ ) हरिहरपुरमठः

एतेषु केचिन्मठा इदानीं नष्टाः केचिदिदानीन्तनाचार्याधीनाः। एतेषां विवरणं परिशिष्टे स्पष्टीभविष्यति।

## श्रीमच्छंकराचार्याणां मुख्यशिष्याः।

( १ ) पद्मपादाचार्यः
( २ ) हस्तामलकाचार्यः
( ३ ) त्रोटकाचार्यः
( ४ ) सुरेश्वराचार्यः } ( माधवीये शंकरदिग्विजये ) मठीयविद्याधर्मपीठाधिपा एते।
( ५ ) चित्सुखाचार्यः — आनन्दगिरीयचिद्विलासीयशंकरदिग्विजययोः।
( ६ ) समित्पाण्याचार्यः
( ७ ) विष्णुगुप्ताचार्यः "
( ८ ) शुद्धकीर्त्याचार्यः "
( ९ ) भानुमरीच्याचार्यः "
( १० ) कृष्णदर्शनाचार्यः "
( ११ ) बुद्धिवृद्ध्याचार्यः "
( १२ ) विरिञ्चिपादाचार्यः "
( १३ ) शुद्धानन्दगिर्याचार्यः "
( १४ ) मुनीश्वराचार्यः "
( १५ ) धीमदात्मा(?)चार्यः "
( १६ ) परमतकालानलाचार्यः — आनन्दगिरीये शंकरदिग्विजये।
( १७ ) लक्ष्मणाचार्यः "
( १८ ) दिवाकराचार्यः "
( १९ ) त्रिपुरकुमाराचार्यः "
( २० ) गिरिजाकुमाराचार्यः "
( २१ ) वटुकनाथाचार्यः "
( २२ ) आनन्दगिर्याचार्यः "

अत्रत्यं शिष्टं परिशिष्टे स्फुटीकरिष्यते।

## द्वारकामठीय-विद्यापीठाधिपाः-('श्रीमच्छंकराचार्यनो समय'नामकग्रन्थरीत्या)

स्थितिरेतत्संवत्सरपर्यन्तम्।

| आचार्यनाम. | ( युधिष्ठिरशके ) |
|---|---|
| १ ब्रह्मस्वरूपाचार्यः | २६९१ |
| २ चित्सुखाचार्यः | २७१५ |
| ३ सर्वज्ञानाचार्यः | २७७४ |
| ४ ब्रह्मानन्दतीर्थः | २८२३ |
| ५ स्वरूपाभिज्ञानाचार्यः | २८९० |
| ६ मङ्गलमूर्त्याचार्यः | २९४२ |
| ७ भास्कराचार्यः | २९६५ |
| ८ प्रज्ञानाचार्यः | ३००८ |
| ९ ब्रह्मज्योत्स्नाचार्यः | ३०४० |
| १० आनन्दाविर्भावाचार्यः | २५ विक्रमशके |
| ११ कलानिधितीर्थः | ८३ |
| १२ चिद्विलासाचार्यः | ११९ |

१ अयं चित्सुखाचार्यो ... भिन्नः।
२ ... ।
३ अस्मादिक्रमशकारम्भः।
४ शंकरविजयग्रन्थकर्ता।

स्थितिरेतत्संवत्सरपर्यन्तम् ।

| आचार्यनाम | ( विक्रमशके ) |
|---|---|
| १३ विभूत्यानन्दाचार्यः | १९४ |
| १४ स्फूर्तिनिलयपादः | २०३ |
| १५ वरतन्तुपादः | २४९ |
| १६ योगारूढाचार्यः | ३६० |
| १७ विज्ञानडिण्डिमाचार्यः | ३९४ |
| १८ विद्यातीर्थः | ४३७ |
| १९ चिच्छक्तिदेशिकः | ४८३ |
| २० विज्ञानेश्वरतीर्थः | ५११ |
| २१ ऋतम्भराचार्यः | ५७२ |
| २२ अमरेश्वरगुरुः | ६०८ |
| २३ सर्वमुखतीर्थः | ६६९ |
| २४ स्वानन्ददेशिकः | ७२९ |
| २५ समररसिकः | ७९९ |
| २६ नारायणाश्रमः | ८३६ |
| २७ वैकुण्ठाश्रमः | ८८९ |
| २८ त्रिविक्रमाश्रमः | ९११ |
| २९ शशिशेखराश्रमः | ९६० |
| ३० त्र्यम्बकाश्रमः | ९६५ |
| ३१ चिदम्बराश्रमः | १००१ |
| ३२ केशवाश्रमः | १०६०. |
| ३३ चिदम्बराश्रमः | १०८३ |
| ३४ पद्मनाभाश्रमः | ११०८ |
| ३५ महादेवाश्रमः | ११४८ |
| ३६ सच्चिदानन्दाश्रमः | १२०७ |
| ३७ विद्याशङ्कराश्रमः | १२६५ |
| ३८ अभिनवसच्चिदानन्दाश्रमः | १२९३ |
| ३९ नृसिंहाश्रमः | १३२६ |
| ४० वासुदेवाश्रमः | १३६१ |
| ४१ पुरुषोत्तमाश्रमः | १३९४ |
| ४२ ज्ञानाराधनाश्रमः | १४०८ |
| ४३ हरिहराश्रमः | १४११ |
| ४४ भवाश्रमः | १४२१ |
| ४५ ब्रह्माश्रमः | १४३६ |
| ४६ वासनाश्रमः | १४५३ |
| ४७ सर्वज्ञानाश्रमः | १४८९ |
| ४८ प्रद्युम्नाश्रमः | १४९५ |
| ४९ गोविन्दाश्रमः | १५२३ |
| ५० चिदाश्रमः | १५७६ |
| ५१ विश्वेश्वराश्रमः | १६०८ |
| ५२ दामोदराश्रमः | १६१५ |
| ५३ महादेवाश्रमः | १६१६ |
| ५४ अनिरुद्धाश्रमः | १६२५ |
| ५५ अच्युताश्रमः | १६२९ |
| ५६ माधवाश्रमः | १६८५ |
| ५७ आनन्दाश्रमः | १७१६ |
| ५८ विश्वरूपाश्रमः | १७२१ |
| ५९ चिद्घनाश्रमः | १७२२ |
| ६० नृसिंहाश्रमः | १७३५ |
| ६१ मनोहराश्रमः | १७६१ |
| ६२ प्रकाशानन्दसरस्वती | १७९५ |
| ६३ विशुद्धानन्दाश्रमः | १७९८ |
| ६४ वामनेशः | १८३१ |
| ६५ केशवाश्रमः | १८६८ |
| ६६ मधुसूदनाश्रमः | १८४८ |
| ६७ हयग्रीवाश्रमः | १८६२ |
| ६८ प्रकाशाश्रमः | १८६३ |
| ६९ हयग्रीवाश्रमसरस्वती | १८७४ |
| ७० श्रीधराश्रमः | १९१४ |
| ७१ दामोदराश्रमः ( = दामोदरानन्दसरस्वती ) | १९२९ |
| ७२ केशवाश्रमः ( = केशवानन्दसरस्वती ) | १९३५ |
| ७३ श्रीराजराजेश्वरशङ्कराश्रमस्वामी [1] | १९५८ |
| ७४ श्रीमाधवतीर्थः | |

( १ ) श्रीराजराजेश्वरस्वामिनां, सिद्धेः पश्चान्मासत्रयादूर्ध्वं संवत् १९५८ पौ. शु० पञ्चम्यां भौमवासरे मकरसङ्क्रमणे द्वारकायामेषां मठीयपीठाधिपत्याभिषेकः।

| | आ० नाम. | संन्यासग्रहणम् शके | सम० | तिथौ | सिद्धिकालः शके | सम | तिथौ | ग० वय |
|---|---|---|---|---|---|---|---|---|
| २६ | शङ्करानन्द | १३५० | कीलक | माघ शु ११ | १३७६ | भाव | माघ शु० ८ | ०६ |
| २७ | चन्द्रशेखरभारती | १३७१ | शुक्ल | फा० शु० १३ | १३८६ | तारण | मार्ग० कृ० ७ | १० |
| २८ | नरसिंहभारती | १३८६ | तारण | वैशाख कृ० १० | १४०१ | विकारी | आषाढ कृ० ७ | १५ |
| २९ | [illegible] | १३९४ | [illegible] | [illegible] | | ईश्वर | ज्येष्ठ कृ० १३ | ४० |
| | | | | | | रौद्र | पौष कृ० ८ | १० |
| | | | | | | श्रीमुख | आषाढ कृ ४ | १६ |
| | | | | | | ख्याता | चैत्र शु० ११ | १३ |
| | | | | | | विकारी | भाद्र० कृ० २ | २३ |
| | | | | | | दुंदुभि | फा० कृ० ७ | २३ |
| ३५ | सच्चिदानन्दभारती | | | | | | | ६१ |
| ३६ | नरसिंहभारती | | | | | | | ६२ |
| ३७ | सच्चिदानन्दभारती | १६०७ | पार्थिव | फा० शु० १५ | १६०२ | दुर्मति | ज्येष्ठ शु १० | ३६ |
| ३८ | अभिनवसच्चिदानन्द | १६६३ | दुर्मति | ज्येष्ठ शु० ३ | १६८९ | सर्वजित् | मार्ग शु ६ | २५ |
| ३९ | नृसिंहभारती | १६८९ | सर्वजित् | माघ शु० ६ | १६९२ | विकृति | फा कृ ५ भा शु ११ | ३ |
| ४० | सच्चिदानन्दभारती | १६९२ | विकृति | भाद्र शु० १२ | १७३० | भाव | अधि भा शु १ | ४३ |
| ४१ | अभिनवसच्चिदानन्द | १७३० | भाव | अधिकभाद्र शु १३ | १७३९ | ईश्वर | फा. कृ ६ | ८ |
| ४२ | नरसिंहभारती | १७३९ | ईश्वर | फा० कृ० १ | १८०१ | प्रमाथी | ज्येष्ठ शु २ | ६२ |
| ४३ | सच्चिदानन्दशिवाभिनवनृसिंहभारती | १७८८ | अक्षय | आषाढ कृ० ९ | | | | |
| ४४ | चन्द्रशेखरभारती | | | | | | | |

## श्रीशृङ्गेरी–कूडलीविद्याधर्मपीठाधिपाचार्यपरम्परा–

नारायणाद्युत्तर–

१ श्रीशङ्कराचार्यः
२ विश्वरूपभारती ( = सुरेश्वराचार्यः )
३ चिद्रूपभारती
४ गङ्गाधरभारती
५ चिद्घनभारती
६ बोधघनभारती
७ ज्ञानोत्तमभारती
८ नरसिंहभारती
९ ईश्वरभारती
१० विद्याशङ्करभारती
११ श्रीकृष्णभारती
१२ शङ्करभारती
१३ चन्द्रशेखरभारती
१४ सच्चिदानन्दभारती
१५ ब्रह्मानन्दभारती
१६ चिद्घनभारती
१७ पुरुषोत्तमभारती
१८ मधुसूदनभारती
१९ जगन्नाथभारती
२० विश्वानन्दभारती
२१ विमलानन्दभारती

१ 'शङ्कर' इत्येतन्मात्र पठ्यते ( श्रीरंग० गु० स्तो० ) । २ भैरूमहाराजकृतग्रन्थे नास्ति । ३ अग्रेतनग्रन्थोत्तरकालिकाविभावितानि तनाम्नो ( ४३–४४ ) उल्लेखो नास्ति । ४ अभिनवसच्चिदानन्दनृसिंहभारतीति--श्रीरंग० २० गु० स्तो० ।

२२ विद्यारण्यभारती
२३ विश्वरूपभारती
२४ बोधघनभारती
२५ ज्ञानोत्तमभारती
२६ ईश्वरभारती
२७ ( विजय ) शङ्करभारती
२८ विद्यातीर्थभारती
२९ भारतीतीर्थः
३० विद्यारण्यभारती
३१ नरसिंहभारती
३२ चन्द्रशेखरभारती
३३ रामचन्द्रभारती
३४ शङ्करभारती
३५ नरसिंहभारती
३६ चन्द्रशेखरभारती
३७ पुरुषोत्तमभारती
३८ नरसिंहभारती
३९ मधुसूदनभारती
४० श्रीविष्णुभारती
४१ गङ्गाधरभारती
४२ नरसिंहभारती
४३ शङ्करभारती
४४ पुरुषोत्तमभारती
४५ रामचन्द्रभारती
४६ नरसिंहभारती
४७ विद्यारण्यभारती
४८ नरसिंहभारती
४९ शङ्करभारती
५० नरसिंहभारती
५१ शङ्करभारती
५२ नरसिंहभारती
५३ शङ्करभारती
५४ नरसिंहभारती
५५ शङ्करभारती
५६ नरसिंहभारती
५७ शङ्करभारती
५८ नरसिंहभारती
५९ शङ्करभारती
६० नरसिंहभारती
६१ नृसिंहभारती
६२ विद्याशङ्करभारती
६३ शङ्करभारती

## आचार्यपरम्पराविषयको विचारः–

ननु ब्रह्मविद्यासम्प्रदायप्रवर्तकाचार्याणां मध्ये शुकाचार्योत्तरं गौडपादाचार्यस्य तदाचार्यत्वं तदुत्तरं श्रीशङ्करभगवत्पादानां तदाचार्यत्वमुच्यते। कलिद्वापरयोः सन्धाववतीर्णस्य व्यासस्यात्मजोऽयं शुक इति तदनन्तरकालः शतं सार्धशतं द्विशतं वा वर्षाणि स्युरिति। तदा च गौडपादाचार्यस्तदुत्तरकालिकः श्रीगोविन्दयोगीन्द्रः श्रीशङ्कराचार्यस्तदुत्तरकालिको वा न भवेदिति कथमियं ब्रह्मविद्यासम्प्रदायप्रवर्तकाचार्यपरम्परा युज्यते ? शुकाचार्यकालस्यैतेषां कालस्य चात्यन्तं महता कालेनान्तरितत्वादिति चेत्,–न–श्रीमतां शुकाचार्याणां समयेऽत्र वचने 'गौडपादं महान्तं गोविन्दयोगीन्द्रम्' इत्युक्तेर्महान्तमित्यस्योभयसम्बद्धं योग्यत्वेन, गौडपादकारिकाकर्तो भिन्नस्य महागौडपादस्य महागोविन्दयोगीन्द्रस्य च तन्नामभ्यां तात्कालिकत्वमभ्युपगम्य तदुत्तरमुत्तरदेशे सर्वत्र पौराणिकानामद्यावधि व्यासनाम्ना व्यवहारवद् गोविन्दयतीन्द्रगौडपादाचार्यशुकव्यासनामस्वन्यतमनाम्ना व्यासनाम्नैव वा व्यवहारस्तदुपदेष्टृपरम्पराप्रवृत्तादिश्रीगौडपादाचार्यावतारान्तमित्यं कल्पनया विना तत्परम्पराया अविच्छे-

दस्य दुर्बचत्वात् । तत्राद्यपक्षेऽन्तिमो गौडपादाचार्यः माण्डूक्यकारिकाकृदन्तिमो गोविन्दयोगीन्द्रः श्रीशङ्कराचार्यगुरुः । तथा श्रीशङ्कराचार्या अपि बहवः । तेषु केवलमुपदेशमात्रेण नास्तिकाञ्जेतुरास्तिकानंशतोऽनुग्रहीतुः कलियुगादिमश्रीशङ्कराचार्यादन्य एव श्रीशङ्कराचार्यः प्रस्थानत्रयभाष्यकृत्, ततोन्यो विष्णुसहस्रनामादिभाष्यकृत्, ततोन्यश्च तुर्मठस्थापकः । तथैव सुरेश्वराचार्यनामानोपि बहव आचार्या ७२९ वर्षपर्यन्तमित्येवं परम्परासीदिति शङ्कराचार्यपरम्परेषा सुरेश्वराचार्यविषयासीत् । सुरेश्वराचार्यश्चैक एव शतायुः किंचिदधिकशतायुर्वासीदिति वा ज्ञायते ।

यश्च प्रस्थानत्रयनृसिंहतापिन्युपनिषदां भाष्यकृत्–स च न्यायवैशेषिकसूत्रकृदुत्तरकालिकः 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' इति ( १।१।२ ) न्यायसूत्रस्य समन्वयसूत्रे-(१।१।४)शारीरकभाष्ये, तथा 'सदकारणवन्नित्यम्' इति (४।१।१) वैशेषिकसूत्रस्य परमाण्वधिकरणे–( २।२।१९ ) शारीरकभाष्ये उल्लेखात् । सोयं [ महाभाष्यकृतः ] पतञ्जलेरुत्तरकालिकः 'तत्प्रकृतवचने मयट्' इति ( ५।४।२१ ) पाणिनिसूत्रस्य ( ब्रह्मसू० १।१।१३ ) शारीरके भाष्ये उल्लेखात्, तथा सांख्यकारिकाकृतकृष्णमिश्रोत्तरकालिकः 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः' इति ( ३ श्लो० ) सांख्यसप्तशतीस्थश्लोकस्य ( ब्रह्मसू० १।४।११ ) शारीरकभाष्ये उल्लेखात् । कपिलप्रणीतत्वेन व्यवह्रियमाणसूत्रात्मकसांख्यशास्त्रगतमेकमपि सूत्रं शारीरके भाष्ये आचार्येण क्वापि नोल्लिखितमिति । तत उत्तरकालिकत्वं नास्य वक्तुं शक्यम् । यदि शारीरकादिभाष्येभ्यः पूर्वकालिकं तत्सूत्रं स्यात्तदा न्यायवैशेषिकजैमिन्यादिसूत्रमिवेतन्मूलसूत्रमेव लिखितं स्यान्न तु सा कारिका । न चैवं 'कपिलो हि न सर्वात्मदर्शनमनुमन्यते' इति, तथा 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्' इति ( श्वेता० उ० ५।२ ) वाक्यस्य कापिलपदघटितस्य ( ब्रह्मसू० २।१।१ ) च शारीरके भाष्ये उल्लेखोऽस्तीति तत्सूत्रोत्तरकालिकत्वं शारीरकभाष्यस्य वक्तव्यमिति वाच्यम् । तदानीं तदनुपलब्धिमात्रेण तदनुल्लेख इत्यदोषात् । वस्तुतस्तस्य सत्त्वे पाठपरम्पराविच्छेदायोगाच्चिरादेव कपिलकृतानां सूत्राणामात्यन्तिकोच्छेदो बभूव कारणान्तरेण वैदिकशाखान्तराणामिवेति ज्ञायते । इदानीं परिदृश्यमानं गुरुलघुभेदेन द्विविधं सूत्ररूपं सांख्यशास्त्रं तु तच्छास्त्रीयकारिकादिग्रन्थाशयज्ञेन पण्डितेन कृतं सत्कापिलनाम्ना प्रसिद्धिं प्रापितं चेति दिक् ।

## द्वारकामठीयविद्याधर्मपीठाधिपाचार्यविषयः–

'द्वारकायां सुरेश्वराचार्या एव विद्याधर्मपीठमधिरुरुहुः' इति केचित्, तन्न-यागादौ पश्चिमदिशः सामवेदाधिष्ठितत्वेन प्रसिद्धेः, सामवेदाधिष्ठितपश्चिमदिगवस्थितद्वारकामठीयाचार्यपीठे निवेशितः–आचार्याणां परकायप्रवेशसमये 'तत्त्वमसि' इति स्वीयमहावाक्येन प्रबोधात्, 'विख्यातं तन्महावाक्यं वाक्यं तत्त्वमसीति च' इति, तथा 'स्वरूपब्रह्मचारीति आचार्यः पद्मपादकः' इति च मठाम्नाये उक्तेश्च निश्चितसामवेदः पद्मपादाचार्य एव ।

सुरेश्वराचार्यस्तु शुक्लयजुर्वेदान्तर्गतकाण्वशाखीयो यजुर्वेदाधिष्ठितदक्षिणदिगवस्थितशृंगगिरि ( शृंगेरी ) मठीयाचार्यपीठे निवेशितः । तदुक्तं ( माधवीये शङ्करविजये १३ त्रयोदशे सर्गे )–'तद्वत्त्वदीया खलु कण्वशाखा ममापि तत्रास्ति तदन्तभाष्यम्। मद्वार्तिकं चापि विधेयमिष्टं परोपकाराय सतां प्रवृत्तिः ' इति ।

' शृंगेर्याः परमगुरुर्द्वादशाब्दं विद्यापीठे स्थित्वा शिष्येभ्योऽद्वैतब्रह्मविद्यामुपदिश्य कंचित्सुरेश्वराख्यं शिष्यं तत्पीठाध्यक्षं विधाय स्वयं निश्चक्राम ' इत्यानन्दगिरिणा शङ्करदिग्विजये प्रतिपाद्यते । तदुक्तं मठाम्नायेपि–' आचार्यो लोकविश्रुतः । वार्तिकादिब्रह्मविद्याकर्ता यो मुनिपूजितः । सुरेश्वराचार्य इति साक्षाद्ब्रह्मावतारकः ' इति ।

द्वारकामठीयपीठस्थानां श्रीमत्परमहंसेत्यादिविरुदाङ्कितमाधवतीर्थस्वामिनां ये गुरवः श्रीमत्परमहंसेत्यादिविरुदाङ्किता राजराजेश्वरस्वामिनस्तेषां ये गुरवः श्रीमत्परमहंसेत्यादिविरुदाङ्किताः केशवानन्दसरस्वतीस्वामिनस्ते शृंगेरीमठपरम्परागता एव–सरस्वतीति योगपट्टपदाङ्कितत्वात्, मठाम्नाये ' नामानि भारती चेति सरस्वती पुरी तथा ' इति शृंगेरीमठे सरस्वत्याः ( शारदायाः ) स्थापनेन तदाराधकत्वे सरस्वती, भारती, शारदेति योगपट्टपदानां तदितरमठेष्वयोगात्, तत्रैव ' तीर्थाश्रमपदे उभे ' इति द्वारकामठगतयोगपट्टपदयोरुक्तयोरन्यतरेण व्यवहाराकरणाच्च । पद्मपादाचार्यस्य क्षेत्रतीर्थाश्रमयात्रास्वभिरुच्या तदर्थं श्रीशङ्कराचार्याणामभ्यनुज्ञया प्रवृत्तिरिति तस्य द्वारकापीठमेवेति तत्र तीर्थाश्रमातिरिक्तयोगपट्टपदायोगः ।

एतेन बागलकोटे मठस्थस्वामिनां तीर्थयोगपदेन सम्बन्धो दृश्यत इत्यनियमोद्वारकापीठस्थानामेवाश्रमतीर्थपदयोः सम्बन्ध इत्यपास्तम् । अत एव द्वारकामठे यवनप्राबल्यसामयिकोपद्रवेणोन्मूलिते ततस्तत्रत्यविद्यापीठाधिपतिराचार्यो निर्गत्य योग्यं स्थानमन्विष्यमाणो मुळबागलनामकस्थाने प्रविश्य तत्र मध्वमतानुयायिनां प्राबल्येन तेषां मध्वानां तदनुगामिनां स्मार्तानां चाश्रयमुपलभ्य मध्वस्मार्तमतसम्प्रदायमिश्रं भागवताख्यं नव्यं सम्प्रदायं प्रवर्तयामीत्यभ्युपगम्य तत्र मठं निर्माय तत्र विद्याधर्मपीठाधिष्ठितोऽभूदित्येतिह्यं स्वरसत उपपन्नम्। एवं च श्रीमत्परमहंसेत्यादिविरुदाङ्कितः सदानन्दतीर्थाचार्यः यो द्वारकाया निर्गत्य बागलकोटस्थाने मुळबागलमठं इत्यपरनामकं मठं संस्थाप्य पीठाधिपतिरभूदिति तस्य तीर्थपदाङ्कितत्वं युक्तमेव । किं चास्य स्वामिनो सदानन्दतीर्थाचार्यस्य विरुदावल्यां वनगिरिप्रतिष्ठापनाचार्येति श्रूयते । सा विरुदावलिर्द्वारकासन्निहिते पर्वतविशेषे वनगिरिनाम्नि सिंहासनप्रतिष्ठापनं द्वारकाधिष्ठितमठीयपीठाधिपतिना कृतमिति तन्निमित्ता । तच्च द्वारकापीठस्वामित्वे सत्येव भवेन्नान्यथा । तत्पर्वतस्य द्वारकापीठाधिष्ठितस्वामिस्वामिकत्वात् । किंच तन्मुद्रायाः कृष्णनामाङ्कितत्वाच्चन्द्रमौलीश्वरनामाङ्कितत्वाच्च द्वैतमतावलम्ब्येवायमाचार्य इति सिध्यति न तु द्वैतीति सिध्यति । न च तस्य विरुदावल्यां दुर्वासपुरवराधीशेति पाठाद् द्वारकाधीशेत्यपाठाच्च न मुळबागलस्वामी द्वारकामठीयाधिकारी स्यादिति वाच्यम्। द्वारकां प्रकृत्य स्कान्दे ( द्वारकामाहात्म्ये तृतीयेऽध्याये )–'दुर्वाससा तु ऋषिणा रक्षिता तिष्ठते पुरी' इति तत्रैव ( ३८ शेऽध्याये )–'तत्रैव लिङ्गरूपेण दुर्वासाः संव्यवस्थितः' इति चोक्तेर्द्वारकेव दुर्वासःपुरमिति पदोपपात् । मुळबागलमठे ब्रह्मचारिणामेव संन्यासप्रक्रिया तु 'ब्रह्मच-

र्याद्' इति मुख्यश्रुतिपक्षावलम्बेन शृङ्गेरीमठवदिति नानुपपन्ना। शृङ्गेर्या सुरेश्वराचार्यस्य विद्यारण्यस्य च संन्यासः गार्हस्थ्योत्तरमिति तु काचित्कमित्यन्यत्। एवं च द्वारकामठशाखामठोऽयं वागलकोटमठः मुळवागलमठ इति वा सिद्धम्।

'न चैवं श्रीमत्सदानन्दतीर्थस्वामिनो वागलकोटस्थानगमनसमये तत्पूर्वं वा द्वारकामठीयपीठस्य यवनैर्निर्मूलितत्वेन तत्पीठाधिकारस्य तैः केभ्योऽप्यदानेन च कथं श्रीमद्राजराजेश्वरस्वामिनस्तत्पीठाधिरोहणेन तन्मठोज्जीवनतदधिकारयोः सम्प्राप्तिरिति वाच्यम्। बाल्ये किञ्चिदधीतांग्लविद्योऽधीतपञ्चवादान्तर्गतद्वित्रतर्कवादो दाक्षिणात्यो ब्राह्मणो द्वारकामागत्य तत्र तन्मठीयपीठमधिकारिशून्यमवलोक्य स्वयं तल्लिप्सुः गौडब्राह्मणादधिगतसंन्यासमानन्दाश्रमनामानं कंचिद्यतिं प्राप्य ततो लब्धसंन्यासः पुनर्द्वारकामागत्य तदा तत्राधिकृतां जीजीबाईनाम्नीं कांचित्स्त्रियं चिरमनुसृत्य तां तत्परिजनानपि परितोष्य स्वयं तत्पीठमधिरुह्य तदधिकारमवाप च। अचिरेण स तत्र स्वातन्त्र्यं स्वस्य तन्मठाचार्यत्वं च प्रकाश्य तया जीजीबाईनाम्न्या प्राक्तनतदधिकारिण्या सह कलहं कुर्वाणस्तां तन्मठाद् दूरीचकार। ततस्तयादितेराजकीयन्यायस्थाने (= कोर्टस्थाने) व्यवहारेणायं श्रीमद्राजराजेश्वरस्वामी जीजीबाय्यनुमतो तिष्ठेन्न तु स्वातंत्र्यमस्यास्तीति पराजिग्ये। तत आदिमे राजकीयन्यायस्थाने न्यायो न लब्ध इति द्वितीयराजकीयन्यायस्थानेऽस्मिन्व्यवहारे श्रीमद्राजराजेश्वरस्वामिना प्रचारिते पुनस्तत्रापि प्राथमिकन्यायस्थानिकन्याय एव स्थिरीकृतः। ततस्तेन मुम्बापुर्यां तृतीये राजकीयन्यायस्थाने व्यवहारेऽस्मिन्प्रचारिते व्यवस्थायाः प्रागेव तस्या मरणेन व्यवहर्त्रभावेन व्यवहारोपशान्त्या निष्कण्टकतामुपलभ्यायं श्रीमद्राजराजेश्वरस्वामी तत्पीठाधिकारी बभूव। एवं चानाद्यविच्छिन्नगुरुपरम्पराप्राप्तसिंहासनारूढेत्यादिशङ्कराचार्यसंस्थापितमठीयाचार्यविरुदावलीपाठानुरोधेन गुरुपरम्पराद्यनुरोधो वाच्यः। तत्रानादित्वं सृष्ट्यादिकालारब्धत्वमाविच्छिन्नत्वमद्ययावत्सृष्ट्यादिकालादनुवृत्तत्वं च श्रीमद्राजराजेश्वरस्वामिनोऽस्य नेति पीठसम्बन्धो न युज्यत एव। 'अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं हरेत्' इति याज्ञवल्क्येनोक्तरीत्यास्य श्रीराजराजेश्वरस्वामिनः सपिण्डत्वाद्यभावेन द्वारकामठाधीशपीठाधिकारायोगात्। न च सपिण्डत्वं सन्न्यासे एव नष्टमिति नेदं वचनं सन्न्यासिविषयकमिति वाच्यम्। 'वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः। क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः' इति याज्ञवल्क्येन स्वशिष्यस्यैव तदधिकारोऽस्यातथात्वात्। ननु पीठस्थतद्भिन्नसंन्यासिनोः को भेद इति चेत्, अत्राहुः– तयोः प्रैषोच्चारणमहावाक्योपदेशरूपदीक्षायां समानायामपि स्वयमात्मारामत्वेप्याचार्यपदाधिष्ठितत्वेन धर्मज्ञाननिष्ठत्वेन लोकानुग्रहाय शिष्याणां निवृत्तिमार्गापर्यागि–प्रवृत्तिमार्गे प्रवर्तनं (=स्वस्ववर्णाश्रमधर्मानुष्ठातृत्वेनानुशासनं) तद्विरुद्धाधर्मानुष्ठाने तेषां निग्रहः स्वपरम्पराप्राप्तमठीयदेवतातीर्थादिसेवनं चेति पीठस्थाः स्वयमात्मारामाः सन्तो वैराग्यमपरित्यज्य विषयवासनामुन्मूल्य शरणागतेभ्यः शिष्येभ्यो ज्ञानमार्गोपदेशादिहिताचरणं न निषिद्धाचरणं 'यतेश्चत्वारि कर्माणि पञ्चमं नैव विद्यते। स्नानं शौचं तथा भिक्षा पुनरेकान्तसेवनम्' इति, 'मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च। दिवास्वापश्च यानं च यतीनां पतनानि षट्। वृथाजल्पं पात्रलोभं संचयं शिष्यसंग्रहम्। हव्यं कव्यं तथान्नं च वर्जयेच्च सदा यतिः। यतिपात्राणि-

मृद्वेणुदार्वलाबुमयानि च। न तीर्थवासी नित्यं स्यान्नोपवासपरो यतिः। न चाध्ययनशीलः स्यान्न॰याख्यानपरो भवेत्' इत्यादिवचनानुरोधादिति न काचिदनुपपत्तिः। न चैवं मठाधिपतीनां यतीनां 'यानारूढं यतिं दृष्ट्वा सचैलं स्नानमाचरेत्' इत्यादिरीत्या निषिद्धानामनेकेषां यानारोहणादीनामधर्माणां स्वयमनुष्ठानेन कथं तेषां पूज्यत्वमिति वाच्यम्। आत्मज्ञस्य जनकस्य राज्ञो राज्याधिकार इव, रहूगणस्याज्ञया जडभरतस्यात्मवेत्तुः शिबिकावहनरूपसेवावृत्त्याश्रयणमिव स्वस्वशिष्यमहाराजधनिकचित्तानुरोधेनैव-शिबिकारोहणघृताद्युत्तमवस्तुभोजनस्वर्णरत्नाभरणादिधारणादिकं तत्तद्देवतासेवार्थं शिष्याद्युपभोगाद्यर्थं च धनधान्याद्युत्पादकग्रामभूम्यादिसंग्रहो राजतसौवर्णरत्नखचितपात्रैरनुष्ठानादिकं धनसंचयस्तद्रक्षणाय भृत्यादिसंग्रहः, हस्त्यश्वादिशकटगवादिसंग्रहश्च न स्वार्थं स्वप्रयत्नादिना साधितमिति न प्रत्यवायावसर इति दिक्।

एतेन गौडब्राह्मणादधिगत संन्यासस्याऽऽनन्दाश्रमनाम्नः संन्यासिनः सकाशाच्छ्रीमद्राजराजेश्वरस्वामिना संन्यासो गृहीत इति नायं द्वारकास्थितद्रविडपद्मपादाचार्यविद्यापीठाधिकारी स्यादिति परास्तम्। यथा श्रीमच्छङ्करभगवत्पादगुरोः श्रीमद्गोविन्दभगवत्पादस्य यो गुरुर्गौडपादाचार्यस्तस्य गौडत्वेन इति श्रीमच्छंकरभगवत्पादानामपि परम्परया तच्छिष्यत्वेन कथं द्रविडपीठाधिकारित्वं तत्पूज्यत्वं च, यथा च मण्डनमिश्रस्य मिश्रदेशीयत्वेन गौडत्वमिति तस्यैव सुरेश्वराचार्यत्वेन द्रविडपीठाधिकारित्वं तत्पूज्यत्वं च तद्वदित्यदोषात्। श्रीमद्गौडपादाचार्याणां सिद्धगुरुत्वात्, श्रीमच्छुकाचार्यशरणागतिसमये श्रीगौडपादाचार्याणां गुडोपायनपाणित्वेन प्रवृत्तेर्गौडेति नामेत्यपि व्याख्यातुं शक्यत्वेन तस्य गौडजातीयत्वे प्रबलप्रमाणान्तरस्यादर्शनात्। अद्वैतब्रह्मोपदेष्टृराचार्यान्तरस्य संन्यासदानयोग्यस्य संन्यासिनस्तदानुपलम्भेन श्रीमद्गोविन्दभगवत्पादैस्तच्छरणीकरणेन तस्यापत्कालिकत्वाच्च। वस्तुतस्तु श्रीसुरेश्वराणां निश्चितेऽपि गौडजातीयत्वे तस्य ब्रह्मावतारत्वेन जगद्गुरुत्वाव्याहतेः शृङ्गगिरि ( = ङ्गेरी ) विद्यापीठाधिरोहणं युक्तमेव। न च संन्यासग्रहणे पतित्वपुत्रत्वधनगृहभूस्वामित्वज्ञातित्वसपिण्डत्वसगोत्रत्वादिकं यथा निवर्तते तथा गौडजातीयत्वं द्रविडत्वं च निवर्तत एवेति वाच्यम्। ब्राह्मणत्वपुरुषत्वादेरपि निवृत्त्यापत्त्या विश्वेश्वरस्मृत्यादिरूपधर्मशास्त्रोक्तानामेव ज्ञातित्वादीनां निवृत्तिर्न ब्राह्मणत्वगौडत्वद्रविडत्वादीनामित्यदोषात्। केषुचिद् गौडेषु संन्यासग्रहणपद्धतेरेवाभावात्संन्यासिनोऽस्य गौडपादादेर्न गौडजातीयत्वमिति केचित्। वस्तुतस्तु गौडत्वद्रविडत्वादेरपि ज्ञातित्वादिवत्स्वधर्माचरणप्रतिबन्धकत्वेन निवृत्तिरित्यङ्गीकारे बाधकाभावादिष्टैव निवृत्तिः। ब्राह्मण इति व्यवहारस्तु ब्रह्माधीते, वेद, वेति व्युत्पत्तिमूलकब्राह्मणत्वादिप्रवृत्तिनिमित्तक इति न तस्य निवृत्तिर्भवतीति दिक्।

## कूडलीमठोत्पत्तिक्रमः—

कूडलीमठः, करवीरमठः, सङ्केश्वरमठ इति च मठत्रयं शृङ्गेरीमठीयशाखाभूतमेव। यथा—शृङ्गेरीमठीयपीठाधिपत्यमुपगतः श्रीविश्वरूपाचार्यः स्वपीठे श्रीशङ्करभारतीनामानं शिष्यं निवेशयामास। एनं देवगोमावीति केचनाहुः। सोमवंशीयकृष्णराजसामयिकः

( आदिम )–श्रीमच्छङ्करभगवत्पादाचार्याद्दशमोऽयं श्रीशङ्करभारतीनामाचार्यः शिष्यैः परिवृतः शकस्य १४२२ तमे वर्षे काशीक्षेत्रयात्रार्थं निर्गत्य श्रीमच्छङ्करभगवत्पादपूज्यस्य गुरोः श्रीगोविन्दभगवत्पादस्य गुहां द्रष्टुं हिमालयं प्राप्य तत्र गुहायां स्वस्य प्रवेशसमयेऽहमेतावद्भिर्दिवसैर्बहिरागमिष्यामि ततोऽग्रे यास्यामः, तावद्भिर्दिवसैर्यदि मया नागम्यते तर्हि युष्मासु यं कंचन गुरुं ( =मत्पीठाधिपं ) कृत्वा शृङ्गेरीं गत्वायमेव तत्रत्यमत्पीठेऽधिकृत इति निश्चित्य सर्वैस्तदधीनतया स्थेयमित्युक्त्वा गुहां प्रविवेश । ततस्तत्र ते शिष्यास्तत्कालं निरीक्ष्य तस्यानागमनेन तदाज्ञामनुसृत्य स्वेषु कंचन तत्पीठाधिपं गुरुं कृत्वेतरे तदाज्ञावशंवदास्ततो निर्गत्य शृङ्गेरीं प्राप्तुं दिनक्रमेण हरिहरक्षेत्रस्य दक्षिणस्यां दिशि पञ्चदशक्रोशाभ्यन्तरे तुङ्गाभद्रानाम्न्योर्नद्योः सङ्गमस्थानभूतं 'कूडली' नामकं ग्रामं गत्वा शृङ्गेरीं जिगमिषव आसन् । एतस्मिन्समये शृङ्गेर्यां तत्रत्यो मठीयकार्याधिकारी ( एजंट ) 'हिमालयं गत आचार्यस्तत्र समाधिस्थोऽभूत्, तेन सह गताः शिष्याः स्वेषु मध्ये कंचनाचार्यं नव्यं परिकल्प्यैतत्पीठाधिपत्यायागमिष्यन्तीत्येवंरूपेण वृत्तान्तं श्रुत्वा ते गुरवस्तु समाधिस्था बभूवुः, नव्य आचार्यः स्थापनीय एव, तत्र तच्छिष्यैः कल्पितसंन्यासिनोऽत्र मठीयपीठाधिपत्येन व्यवस्थापकाधिकारदानापेक्षया वयमेवात्र कस्यचिद्विदुषः पुस्तकसन्न्यासं दत्त्वा तत्पीठाधिपं कृत्वा तस्मै एनं मदधिकारं दास्यामः' इति तत्रत्यः सर्वैः सह निश्चित्य तथैवाऽकरोत् । तदा गुहातो निर्गत्य बदरीकेदारोत्तरमानसादियात्रां कुर्वन्गुहां प्रविष्टोऽयं श्रीशङ्करभारत्याचार्यस्ततः काशीमागत्य तत्र शिष्यैः स्वाज्ञानुरोधेन स्वेषु कस्मैचिद्दत्तं संन्यासं तदधिकारं चावगत्य ततः शृङ्गेरीं प्रति तेषामचिरेणैव कालेन निर्गमनं च श्रुत्वा ततः क्रमेण कूडल्यां प्राप्तानेतान् प्रापत् । तदा तैः प्रथमं कूडलीमागतैः प्रणम्य कुशलप्रश्नोत्तरं कस्मैचित्स्वदत्तं संन्यासतदधिकारादिकं च विज्ञाप्य ज्ञातं शृङ्गेरीमठीयवृत्तान्तमागताय श्रीशङ्करभारत्याचार्याय व्यज्ञापि । ततः श्रीशङ्करभारत्याचार्याः शृङ्गेरीस्थमठीयाधिकारिप्रमुखानेनं विषयमपृच्छत् । ततस्तेऽधिकारिप्रमुखैः परस्परं विचिन्त्य 'तत्स्थापितनव्यसंन्यस्तस्वामिनोऽत्राधिकारदाने यदर्थमेतावान्परिश्रमः कृतः स सर्वो व्यर्थः स्यात्, यतोऽस्माकमधिकारव्यवस्थास्मत्कृता तेनैवाङ्गीकृता स्यात्, तस्मादस्मत्कृतव्यवस्थैव येनकेन वा प्रकारेण स्थिरीकर्तव्या नान्यथा' इति निश्चित्य कूडलीस्थश्रीशङ्करभारत्याचार्यं प्रति 'एकस्मिन्नाचार्ये पीठाधिपत्यं कुर्वति जीवति वा नान्यस्य तत्पीठाधिपत्यं भवेदित्येवं चिरान्नियमे स्थिते तद्विरुद्धमाचरितवते तुभ्यमेव ( वतस्तैव ) शृङ्गेरीप्रवेशं न दास्यामः ( कारयामः ) किं तु तत्र त्वत्प्रवेशनिरोधमेव (=शृङ्गेरीप्रवेशो यथा न स्यात्तथा निरोधमेव ) कुर्मः' इत्युत्तरं तस्मै अद्भुब्राह्मणमुखेन न लेखद्वारा । ततः श्रीशङ्करभारतीस्वामिनस्तत्रत्याधिकारिप्रमुखानां कृतघ्नतां पर्यालोच्य।चरितहृदयाः 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इति न्यायेन तदीयपारपत्याद्यधिकारिविरोधेन तत्र स्वाधिकारस्थापनाद्विरम्य शान्तचित्ता अभूवन् । ततः श्रीशङ्करभारतीस्वामिभिः शृङ्गेरीमठीयपीठाद्यधिकारव्युदासेऽपि तच्छिष्या एनं स्वगुरुपराभवमसहमानास्तदानीन्तनमैसूर्महासंस्थानाधिपस्य न्यय-

१ शृङ्गेरीमठीयगुरुपरम्परायां क्वापि तत्र नादिष्टादिमशङ्कराचार्यान्नवमो विश्वरूपाचार्यो दशमः शङ्करभारत्याचार्यश्चेति द्वौ न निर्दिष्टौ । २ अत्र शकपदेन विक्रमस्य शालिवाहनस्य वा शक इति स्फुटं न ज्ञायते ।

स्थाने सर्वमेनं वृत्तान्तं विज्ञापयामासुः । तदा तत्र वादिनां प्रतिवादिनां च भाषाः श्रुत्वाऽऽज्ञा-दत्ता ( आंग्लशकस्य पञ्चपञ्चाशदधिकाष्टशतयुत्तरसहस्र ( १८५५ ) तमवर्षस्य प्रथमस्य जनवर्याख्यस्य मासस्यान्तिमे ३१ तमतारीखाख्ये दिवसे आंग्लराजकीयन्यायलेखेऽवतारितं (=रिकार्डरिजस्टर्ड ) सद्वर्तते-यथा-"आदिशङ्कराचार्यपरम्परागतोऽयं शृङ्गेरीस्वामी शृङ्गेर्या महायात्रां देशसंचारं च कर्तुं निश्चित्य गतः, तस्मिन्समये केषुचिद्दिवसेषु व्यतीतेषु एतद्ग्रामनिवासिनो महाजनप्रभृतयः ( अस्ताव्यस्ततसमाचारं ) = विविधप्रामाण्यविरुद्धवृत्तान्तं प्रकटय्यान्यस्मै पुस्तकसन्न्यासाश्रमं ददुः, ततः केषुचिद्दिवसेषु व्यतीतेषूक्तः स्वामी (=यात्रां गतः स्वामी देशयात्रातः प्रतिनिवृत्त्य ) कूडलीमागत्यैनं वृत्तान्तं (=महाजनैः शृङ्गेरीमठीयपीठाधिपत्ये स्थापितस्यान्यस्य संन्यासिनो वृत्तान्तं श्रुत्वा राज्यस्थाने ( हुजूरात ) लेखनस्य निवेदनात्पक्षद्वयमपि तेषामाह्वापनद्वारा विचारितम् । तेन चास्माभिस्तत्रत्यैर्महाजनैर्हठेन दत्तः पुस्तकसंन्यासः सत्यः इत्यवगतम् । तथाप्युपदेशसन्न्यासादिकमनेन देयं, पुस्तकसन्न्यासिभिस्तु ग्रामे ( शृङ्गेरीग्रामे ) एव स्थित्वा श्रीशारदामातृपूजां कुर्वद्भिर्मठे नियमनिष्ठया स्थातव्यं शङ्कराचार्यपरम्परागतैः स्वामिभिः देशसञ्चारादिकं कुर्वद्भिः कूडल्यां ( लग्यां) स्थातव्यम्" इति । इदं ( प्राचीनलेख-पुस्तक-राजशासन-पत्रिकालेखाद्यनुरोधेन शशिशेखरदामोदरसङ्केश्वरीयविद्याशालाया अध्यापकेन लिखिते ) "श्रीसंस्थानसङ्केश्वर मठ करवीर व सङ्केश्वरचा इतिहास" इति नाम्ना प्रसिद्धे मुद्रितपुस्तके स्पष्टम् ।

एवं व्यवस्थायां सत्यामप्यसकृदेतद्विषये कलहोत्तरं शृङ्गेरीमठीयाधिकारस्तुङ्गभद्रावधिको, नाग्रे इत्येवमसकृद्व्यवस्थाप्यभूदित्यन्यत् ।

ततो मूलाचार्यपरम्पराधिरूढाः श्रीशङ्करभारतीस्वामिनः प्रागुक्तरीत्या शिष्यप्रशिष्यैः सह कूडल्यामेवातिष्ठन् त्वाचारव्यवहाराधिकारं निरवर्तयन् । ततः किंचित्कालानन्तरं कूडल्यामेव नव्यं मठं निर्माप्य शिष्यैः स्वाज्ञया दत्तसंन्यासं स्वामिनं साधिपत्यं तत्र विद्यापीठे उपदेशादिना ते स्थापयामासुः । तेन तस्य स्वामिनो-हैदराबादनिजामप्रभुदत्तग्रामाद्युपर्यधिकारादयो लब्धाः । इति कूडली ( = कूडगी ) मठस्योत्पत्तिक्रमः ॥

## अथ करवीरमठोत्पत्तिक्रमः-

कूडल्या मठे विद्यापीठं संस्थाप्य श्रीशङ्करभारतीस्वाम्याचार्याः पुनः काशीयात्रार्थं जग्मुः। ते मध्ये मार्गे सङ्केश्वर(सांख्ये)श्वरनामकग्रामस्योत्तरतो वल्लभगढनाम्नि दुर्गे हरिद्रानाम्न्या देव्या दर्शनायागच्छन् । तेषां सङ्केश्वरे 'श्रीसङ्के ( = सांख्ये)श्वरस्य पूजा त्वया कार्या ' इति स्वप्नोऽभूत् । तस्मात्तत्र गत्वा नित्यं कश्मलापहारिण्यां हिरण्यकेश्यपरनाम्न्यां नद्यां शुक्लतीर्थे स्नात्वा स गुरुः श्रीशङ्करपूजां कुर्वन्नासीत् ।

कदाचित्तत्र ' विजापूरबादशाह'नाम्नः विजापूरराज्याधिपस्य योऽमात्यस्तस्य ' हजरत् इमादिमफ्फाह्ल' नाम्नः सेनापाः पत्या तेन मार्गेण गच्छता स्वामिनं दृष्ट्वा प्रणिपत्य तद्गुणप्रदाय्य तेभ्यः श्रीशङ्करभारत्याचार्येभ्यः कांश्चिद्ग्रामान्दत्वाऽगामि । ततस्तत्र संकेश्वरे स श्रीशङ्करभारत्याचार्यो मठं निर्मापयामास । ततस्तेभ्यः कदाचित्कोल्हापूर (=कर-

वीरक्षेत्र ) महाराजेन केचन ग्रामा दत्ता अभूवन् । तेन तदारभ्य स मठः करवीरमठ इति लोकैर्व्यवहर्तुमारेभे । एवं मठं निर्माय पीठं स्थापयित्वा तात्कालिकानां राज्ञामाश्रयेण मलप्रभानद्या उत्तरतीरमारभ्य काशीपर्यन्तं गुरुपरम्पराऽऽगताः श्रीशङ्करभारतीस्वामिनः स्वशिष्येषु स्वाधिकारं यथावत्स्थापयामासुः । अत्र मठे मूलश्रीशङ्कराचार्या अस्मै गृहस्थायैव संन्यासं दत्त्वोपदेशेन तन्मठीयपीठाधिपत्यं ददुरित्यद्यापि तत्र मठे गृहस्थ एव तत्पीठाधिपोपदेशेन सहसन्न्यासं प्राप्य तत्पीठमधिष्ठायाधिकरोति । तस्माच्छृङ्गेरीमठीयपीठाधिपत्वेन भारतीत्यंकिनाम्ना व्यवहारोनयोरुभयोरपि मठयोः । स्पष्टीकरिष्यते शिष्टं परिशिष्टे इति दिक् ।

## अथ कूडलीकरवीरमठीयो वृत्तान्तविशेषः ।

"बौद्धादिनानामतानां प्राबल्येन प्रसाराद्वेदमार्गोच्छेदेन बहूपद्रुतान् दृष्ट्वा नारदो ब्रह्माणं प्राप्य तस्मै तदेतत्सर्वं विज्ञापयामास । ततो ब्रह्मा सनारदः कैलासं प्राप्य शंकराय सर्वमिदं निवेद्य त्वया लोकेवतीर्य वेदमार्गप्रचारप्रतिबन्धनिवारणेन तत्प्रचारं यथावल्लोके प्रतिष्ठाप्य देवेभ्यो हव्यादिप्रापणेन जगद्रक्ष्यमिति प्रार्थयन्तं तं तथास्त्विति वरेण छन्दयित्वा श्रीशङ्करः शङ्कराचार्यरूपेणावततार ।

यथा-चिदम्बरक्षेत्रे सर्वज्ञनामा ब्राह्मणस्तत्पत्नी कामाक्षी चोभावपि चिदम्बरेश्वरमाकाशलिङ्गे सन्तत्यर्थं पूजयाञ्चक्रतुः । तस्य प्रसादेन तस्मात्सा विशिष्टां नाम कन्यां प्रासूत । क्रमेण विवाहयोग्येन वयसोपेतां तां तत्पिता विश्वजिन्नाम्ने द्रविडजातीयाय ब्राह्मणायाऽदात् । स तां स्वगृह्योक्तविधिना प्रतिगृह्योदवहत् । ततः स वेदान्ताभ्यासलग्नचित्ततया विरक्त आत्मसाक्षात्कारोपयोगिनस्तपसोनुष्ठानाय विजनमरण्यं जगाम । ततः सा विशिष्टाऽविच्छेदेनाकाशलिङ्गे चिदम्बरेश्वरं पूजयमानाऽभूत् । एवं बहुषु कालेषु व्यतीतेषु पुरःस्थितेषु बहुषु श्रोत्रियेषु ब्राह्मणेषु शंकरस्तेजःपुञ्जरूपेण ब्राह्मण्या विशिष्टाया मुखबिलेनोदरं प्राविशत् । तत्तेजःप्रवेशमात्रेण गर्भिणीं तां ते ब्राह्मणाश्चिदम्बरेश्वरं पतिं प्रकल्प्य यथाकालं यथाविधि ( पुंसवनादिकान् ) संस्कारानकुर्वन् । ततो दशमे मासि सा शङ्कराचार्यं युधिष्ठिरशकस्य त्रयोविंशत्युत्तरसप्तशत्यधिकद्विसहस्र ( २७२३ ) तमे सर्वधारिवर्षे प्रासूत । तदा देवदुन्दुभयो नेदुः, देवाः पुष्पाणि ववृषुः । तत आचार्यो बौद्धादिवेदविरुद्धनाना (नास्तिक ) मतानि निरस्य सरस्वत्या सह मण्डनमिश्रं शास्त्रवादेन जित्वा मण्डनमिश्रं सुरेश्वराचार्यनामानं कृत्वा तस्मै भारतीनामकं योगपट्टं च दत्त्वा सरस्वत्याः स्थापनार्थं तया सह शृङ्गगिरि ( शृङ्गेरी ) क्षेत्रं प्राप्य तत्र सरस्वतीं संस्थाप्य शिव-शक्ति-विष्णु-गणपति-सूर्य-भैरवाख्यानि षण्मतानि स्थापयामास । ततस्त्रोटकाचार्य-हस्तामलकाचार्य-विश्वरूपाचार्य-पद्मपादाचार्याख्यांश्चतुरः शिष्यान्स देशिकश्चतुर्दिक्षु निर्मापितेषु चतुर्षु मठेषु स्वनाम्ना विद्यापीठाधिपानकरोत् । शृङ्गेरीमठस्थापनोत्तरं तत्र कंचित्कालमुषित्वा सरस्वत्या वचसः सत्यत्वसम्पत्तये ( =असत्यत्वनिराकरणाय ) दक्षिणकाशीत्वेन प्रसिद्धं करवीर ( =कोल्हापुर ) क्षेत्रमागत्य महालक्ष्मीं समभ्यर्च्य प्रणम्येदं करवीरक्षेत्रं दक्षिणकाशीमहाक्षेत्रमिति ( स्वीय ) मठस्तत्र निर्माप्य ( विद्याधर्मपीठ ) स्थापना कार्येति शिष्यानाप्य विमलनिर्मलनामक क्षेत्रम् ( =मुम्बयीनगरस्य नातिदूरे स्थितम् ) आगत्य समा-

धिना स्वधामागमत् । ततः श्रीशङ्कराचार्येण तत्तत्पीठेषु स्थापितानां शिष्याणां परम्परा यथावत्कांश्चित्कालानतिष्ठत् । एवं व्यतीतेषु कालेषु बहुषु शृङ्गेरीपीठाधिपः श्रीविद्यानृसिंहभारतीस्वामिनामाचार्यो महायात्रां ( =काशीयात्रां ) चिकीर्षुः श्रीमदाचार्यस्वामिनिमित्ता धर्मस्थापनेति श्रीव्यासदत्तस्य चन्द्रमौलीश्वरस्य यथाविधि पूजा कार्येति श्रीविद्याशंकरभारतीनामानं शिष्यं कृत्वा महायात्रार्थं जगाम । स श्रीविद्यानृसिंहभारतीनामक आचार्यः काशीं प्राप्य तत्र कांश्चित्कालांस्तपश्चर्यापूजास्नानादिभिर्नीत्वा प्रत्यावृत्य शृङ्गेर्यां स्वमठमाजगाम । ततस्तत्रानेन महायात्रासमये प्रतिष्ठापितः श्रीविद्याशङ्करभारतीनामा शिष्यस्तत्रागतं स्वगुरुमवलोक्य लोभेन मुग्धो भूत्वा भवता स्थापिते मयि स्थितेऽस्मिन्संस्थाने लोभो न त्वया कार्य इति तमुवाच । ततोऽस्मदीयः शिष्योयमिति तमुपेक्ष्य श्रीविद्यानृसिंहभारतीनामाचार्यः संस्थानदेवतात्मा कूडलीग्रामं तत आजगाम । तत्र मठीयसंस्थानसम्प्रदायानुरोधेन शिष्यपरम्परा यथावदतिष्ठत् । ततः कदाचिदत्यन्तप्रियशिष्यः करवीराधिपो राजाऽऽतः आदरेण सह 'कूडलीक्षेत्रात्करवीरक्षेत्रं दक्षिणकाशीति श्रीमद्भिरवश्यमागन्तव्यम्' इत्यतिभक्त्या वृद्धस्वामिनं प्रार्थयामास । एवं तेन राज्ञा प्रार्थितो वृद्धः स्वामी स्वशिष्यं राज्ञा सह करवीरक्षेत्रं प्रेषयामास । करवीरं प्रति प्रस्थितः शिष्यस्वामी कूडलीतः करवीरक्षेत्रागमनकाले 'धर्मव्यवार्थं यत्नं श्रीमद्भ्यः सम्प्रेषयामि' इत्युक्त्वा श्रीगुरुस्वामिनं प्रणिपत्य राज्ञा सह करवीरक्षेत्रं प्राप्य धर्मकृत्यानि कार्यस्तत्र संस्थानधर्मान्प्रावर्तयत् ।

एवं केषुचिद्दिवसेषु व्यतीतेषु कूडलीस्थो गुरुस्वामी करवीरस्थाय शिष्यस्वामिने "अस्मच्छरीरं बहस्वस्थं ततो युष्माभिर्लेखस्यास्य वाचनोत्तरक्षण एवागन्तव्यम्, यदि युष्माकमागमने विलम्बस्तर्हि युष्माभिर्यन्मुखेन लेखः प्रेष्यते तस्मै ब्राह्मणाय सन्न्यासं दत्त्वात्रत्यधर्मरक्षार्थं प्रेषणीयः" इति लेखं प्रेषयामास । ततः स करवीरस्वामी कूडलीस्वास्यान्नालेखं वाचयित्वा तामाज्ञामनुस्मृत्य कस्मैचिद्ब्राह्मणाय सन्न्यासं दत्त्वा लेखेन सह तं कूडलीं प्रेषयामास । स करवीरक्षेत्रस्वामिना प्रेषितो नव्यस्वामी करवीरक्षेत्राद्यावद्धरिहरक्षेत्रे तुंगभद्रानदीतीरं प्राप तावत्कूडल्यां गुरुस्वामी दैवगत्या समाधिना सिद्धो बभूव । तत्र नव्यस्वामिने एको ब्राह्मणः "कूडलिस्थो गुरुस्वामी समाधिस्थोऽभूत्, तत्र यो मठीयकार्यनिर्वाहकोधिकारी ( =एजंट ) आसीत्स कांश्चिद्दिवसानतीत्यानन्तरं तत्रत्याय कस्मैचित्स्वबन्धवे तत्रत्यं राजानं ( =ग्रामाधिकारिणं ) राजकार्यं स्वानुकूलं कृत्वा कूडलीस्थब्राह्मणैः सहितः पुस्तकसन्न्यासं दत्त्वा मठाधिपतिमाचार्यं कल्पयामास" इति तत्रत्यं वृत्तं वर्णयामास ।

एवमशास्त्रीयो व्यवहारः ( सन्न्यासः ) कदापि न भवेदिति संशयमापन्नो नव्यस्वामी कूडलीं प्राप । ततोऽयं स्वामी तत्रत्यान् ब्राह्मणान् कार्याधिकारिणं चाब्रवीत्–"श्रीगुरुस्वामिनाऽऽज्ञयैव सन्न्यासाश्रमं दत्त्वैतन्मठसंरक्षणार्थमहमाज्ञप्तो ( = इं प्रेषितो ) स्मि" इति । ततस्ते तद्वचनं श्रुत्वा–"संस्थानस्यास्य रक्षणार्थं स्वामिनोऽस्माभिः स्थापिताः" इति विनयेनैनं व्यजिज्ञपन् । ततस्तान्प्रति करवीरक्षेत्रादागत आचार्य उवाच–"लोके वंशो द्विविधः शास्त्रे उक्तः–तत्रैको ब्रह्मविद्योपदेशेन, अन्यो जन्मनेति । एतत् प्रकारद्वयं विहाय प्रकारान्तरेण

वेशो नास्ति । सन्न्यासी गुरुपरम्पराप्राप्तज्ञानोपदेशेनैव गुरुपरम्परामधिरोहति नान्यथा पुस्तकावलम्बेन जात आचार्यमतविरुद्धः सन्न्यासः कथमाचार्यस्वामिनां सम्मतः स्याद्" इति । ततः स्वामिनो वचांसि निशम्य यद्यपि ब्राह्मणाः मठीयकार्यनिर्वाहकोधिकारी चेत्येते सर्वे स्तब्धचित्ता बभूवुः, तथापि राजकीयस्य मठीयकार्यनिर्वाहकस्याधिकारिणश्च चित्तदाढर्येन श्रुतानि वचनानि व्यर्थान्यभूवन् । ततः कूडलीमागतः करवीरक्षेत्रगतमठीयस्वामिशिष्य आचार्यः कूडल्या निर्गत्य करवीरं प्राप्य करवीरस्थश्रीगुरुस्वामिने सर्वं कूडलीमठीयकार्याधिकारिकृतं मठीयेतिवृत्तं विज्ञाप्य तत्रैव श्रीगुरुसन्निधावतिष्ठत् ।

ततः कदाचित्कूडलीमठीयकार्यनिर्वाहकाधिकारिकल्पित आचार्यः सातारनगरमागत्य श्रीशाहूछत्रपतिराजाय सर्वं निवेद्य तमनुकूलं कृत्वाऽऽचारव्यवहारप्रायश्चित्तविषयकव्यवस्थां करवीरमठीयपीठगतेनाचार्येण कूडलीमठस्थितेनाचार्येण( = मया ) चेत्युभाभ्यां मिलित्वैव कार्यत्येवं महाराजच्छत्रपत्याज्ञालेखलाभाय महायत्नमकरोत् । श्रीमान्महाराजः शाहूछत्रपतिः सर्वतः क्षेत्रस्थान् पण्डितान्ब्राह्मणानामन्त्र्य तेभ्यः सर्वमिदं न्यरूपयत् । ततस्तत्रोभयपक्षाश्रयो वादोऽभूत् । ततः स राजा तं वादं निशम्य पर्यालोच्य च सभासद्भिर्ब्राह्मणैश्च सह संभूय कूडलीमठीयमाचार्यमुवाच—" पुस्तकेन सन्न्यासाश्रमं स्वीचक्रे—तस्माद्युष्माकं स्वामिनां संस्थानविषये आग्रहकरणे प्रमाणत्वेन शास्त्रीयं वचनं नोपलभामहे " इति । ततस्तेषां तद्वचनं श्रुत्वा ते कूडलीनव्यस्वामिनः ततस्तान्कूडलीमठीयाऽऽचार्यादीनूचुः । " वयं श्रीमत्संस्थानमागताः स्म । अत्र विषये यूयं सर्वे ब्राह्मणा महाराजश्च यथाज्ञापयन्ति तथा शृणुमः " इति । ततस्ते तस्य दीनां तां वाचं श्रुत्वा खिन्नहृदयाः करवीरमठीयपीठाधिपतिमाचार्यं तोषयित्वा प्रार्थयामासुः—"श्रीमतां नाम्ना कूडलीमठे देवपूजनं ब्राह्मणभोजनं कारयंस्तुङ्गाभद्रामलापहारिणिनद्योर्मध्ये आचारव्यवहारप्रायश्चित्तव्यवस्थामेते कूडलीमठीया आचार्याः कुर्वन्तु । तुङ्गाभद्रामलापहारिणिनद्योर्मध्यदेशे स्थितानां ग्रामाणां तथा तत्रोत्पन्नधनादिकस्य तत्रत्यदेवपूजाब्राह्मणभोजनादिव्ययार्थं श्रीमद्भिस्तदायत्तीकरणे आज्ञा देया" इति । ततः करवीरमठीयपीठाधिपतिराचार्यस्तेषां प्रार्थनां मानयामास, तेन ब्राह्मणाश्छत्रपतिशाहूमहाराजश्च संप्रदायानुरोधेनाचारव्यवहारप्रायश्चित्तदीपाराधनपूजादिकं कूडलीमठीयस्वामिन एते स्वायत्तं कृत्वा "मलापहारिणीनद्या उत्तरत्र पूर्वपश्चिमसमुद्रमध्यगते सर्वस्मिन्नुत्तरदेशे आचारव्यवहारप्रायश्चित्तव्यवस्थां सञ्चारादिकं च करवीरमठीयपीठाधिपा एव कुर्युः, उपरिनिर्दिष्टचतुःसीमामध्यप्रदेशस्थमठीयग्रामक्षेत्रकेदारारामगृहधनादिकं ( स्वास्थ्यं ) श्रीकरवीरमठीयब्राह्मणभोजनादिव्ययार्थं भवतु" इत्येवं व्यवस्थाऽभूदिति श्रीमच्छङ्कराचार्यावतारचरित्रं वर्णयतां श्रोतॄणां चेष्टं भवतीत्यलमतिविस्तरेण स्वस्त्यस्तु 'रुजु' इत्यलम् इति ( प्रोफेसर—राजवाडेकृतमराठ्यांच्या इतिहासाचीं साधनें इत्येतन्नामकमहाराष्ट्रभाषात्मकात्पुस्तकात्–(६षष्ठे खण्डे पृष्ठे ५२६ ) उद्धृत्यास्माभिः संस्कृतभाषया परिवर्त्य प्रकाशितोयं प्रायस्तात्पर्यार्थ । शिष्टं परिशिष्टे स्फुटीकरिष्यते ।

## करवीरमठविषये विचारविशेषः-

सोमवंशीयः कृष्णराजः आङ्ग्लशकस्य त्रयोदशे(१३) शतके आसीदिति तत्सामयिकः शृङ्गेरीमठाधिप (आदिम) श्रीमच्छङ्करभगवत्पादाचार्यादशमः श्रीविद्याशङ्करभारती-नामक आचार्यः दक्षिणवाराणसीत्वेन प्रसिद्धे करवीरक्षेत्रे धर्मपीठं स्थापयामासेत्युक्तम्। ततः कालान्तरे विमलनिर्मलाख्ये मुम्बाराजधानीनिकटवर्तिवसईनाम्नः प्रसिद्धग्रामस्य समीपस्थे ग्रामे ते स्वामिनः समाधिस्था बभूवुः। किंचाद्यावधि ( = सन् १९१४ वर्षावधि ) पीठाधिष्ठितगुरूणां बिरुदावलीप्रशस्तिपत्रिकाभिः, तथा तांस्ताञ्छिष्यान्प्रति लिखितेषु धर्मव्यवस्थाविषयकाज्ञापत्रेषु संमुद्रितायां गोलाकृत्यां मुद्रायाम् 'अनेकशक्तिसंघट्टप्रकाशलहरीघनः। ध्वान्तध्वंसो विजयते विद्याशङ्करभारती' इति पद्यमनूद्य 'श्रीमन्महाराजधानीकृष्य (इय) शृङ्गपुरवराधीशश्रीमद्राजाधिराजगुरुमण्डलाचार्यश्रीमच्छङ्कराचार्यान्वयसंजाताभिनवपञ्चगङ्गातीरनिवासकमलानिकेतनकरवीरसिंहासनाधीश्वर'-इत्यादिरूपकरवीरकमठीयविद्यापीठाचार्यबिरुदावल्यां 'करवीरक्षेत्रे' तत्र इत्युक्त्या तेषां धर्मपीठमस्तीति ज्ञायते। करवीरे सङ्के ( साङ्ख्ये ) श्वरे, खिद्रापूरस्थले, नृसिंहवाडी( वाटिका) नाम्नि स्थाने, गोलवणनामके स्थाने,पैठणनामके स्थाने, काश्याद्यनेकस्थानेषु, समयानुरोधेन प्रसङ्गानुरोधेन च तत्तत्स्थानगतानां शिष्याणां सौकर्यार्थं च तत्तत्कालिकैः करवीरपीठाधिष्ठितैरेवाचार्यैर्मठा निर्मापिताः।

करवीरमठस्तु करवीरे धर्मपीठाधिरोहणसमय एव निर्मापितः। करवीरधर्मपीठाधिष्ठितैर्जगद्गुरुदेवगोसावीत्युपपदकविद्याशङ्करभारतीस्वामिभिः शके १५०० समेऽथवा ततः प्राक्तनेऽग्रिमे वा वर्षे सङ्के ( साङ्ख्ये ) श्वरनामके स्थाने मठ एको निर्ममे। काशीस्थो मठोऽपि तत्समय एव निरमायीति ज्ञायते। यत एतदाचार्येभ्योऽन्यैः करवीरधर्मसिंहासनाध्यक्षैः काशीयात्रा नैवाकारि। पैठणीमठस्तु श्रीविद्यानृसिंहभारतीतैलङ्गस्वामिनाम्ना करवीरमठपीठाधिपेनाकारि। सोऽयं करवीरमठ इदानीमतीव शिथिलो दरीदृश्यते। यतः पुण्यपत्तनमहाराजस्य पेशवेनाम्न आज्ञया कोदेररावपटवर्धन-( कागवाडकर ) नाम्ना सेनापतिना करवीरक्षेत्रे सैन्यैराक्रमणेन करवीरक्षेत्रस्था धनिन उपद्रुता अभूवन्। ततस्ताः सर्वाः प्रजास्तदुपद्रवमसहमानाः स्वीयधनकनकाम्बरादीनीदानीं सुरक्षितान्यत्र स्युरित्यालोच्य करवीरमठे आचार्याज्ञया योग्यस्थानेषु स्वस्वधनकनकाम्बरादीनि स्थापयित्वा तदधीना आसन्। तेन तान्याचार्याधीनान्यभूवन्। ततः कदाचित्कोदेररावपटवर्धनस्ताः प्रजाः स्वायत्तीकर्तुं तानाचार्यान्प्रार्थयामास। तत आचार्यास्ता मदीयाः प्रजा' मां शरणमापन्नास्ततो न त्यजामीत्यवदन्। ततः स सेनाध्यक्षस्तं मठं प्रविश्य सर्वेषामपि धनकनकाम्बरादिकमपहृत्य करवीरमठमग्निना दाहयामास। तेन बहूनि पुस्तकानि लौकिकलेखाश्च निरवशेषं भस्मीबभूवुः। ततस्तत्रास्थित आचार्यस्ततो निर्गत्य सङ्के ( = साङ्ख्ये ) श्वरमठाधिष्ठितपीठे

(१) श्रीशङ्कराचार्यकरमारम्याचार्यग्रन्थे सोमवंशीयः कृष्णराजः आङ्ग्ले त्रयोदशे (१३) शतके आसीदित्यं यदुक्तं [illegible] मैसूरराज्य[illegible] देन [illegible] १८५५। १। ३१ [illegible] विद्यते। (२) धर्म[illegible] मदा[illegible]।

स्वाधिकारं चक्रे । तत आरभ्य करवीरमठीयपीठाचार्य इति सङ्केश्वरमठीयपीठाचार्य इति च प्रथमाचार्याणामिदानीन्तनानां च प्रथा समभवत् । कालवशेन परंपरया तद्वृत्तान्तस्य ह्रसितत्वाल्लुप्तत्वाच्च तदज्ञानादिदानीन्तनाः सङ्केश्वरमठ एवानादिर्न करवीरपीठ इति करवीरमठस्यैव नव्यत्वं मन्यते ।

किंच–श्रीमत्परमहंसेत्यादि विरुदाङ्कितशृङ्गेरीसिंहासनाधीश्वरश्रीमच्छङ्कराचार्यान्वयसंजाताभिनवश्रीविद्याशङ्करभारतीकरकञ्जोद्भवश्रीविद्यानृसिंहभारतीस्वामिचरणकमलेषु सततकृपास्पदशाहूच्छत्रपतिराजविरचितसाष्टाङ्गप्रणामपूर्वा विज्ञप्तिः—कार्तिककृष्णे १ सोमवासरपर्यन्तं कुशलं, सर्वं वृत्तं यथापूर्वमस्ति । अयं विशेषः–कूडलीमठीयपीठाधिपस्वामिनः सञ्चारोद्देशेन सातारानगरमागता इति वृत्तान्तं ज्ञात्वा सर्वैर्ब्राह्मणैः सह श्रीमद्भिः करवीरमठीयपीठाधिपतिभिः श्रीजगद्गुरुभिः साताराराजधानीमागत्य प्रेषितमाज्ञापत्रं "कूडली ( लगिरि ) स्वामिनां ( =मठीयपीठाधिपस्वामिनां ) देशान्तरेषु सञ्चारेऽधिकारस्याभावेऽपि तदर्थमागतानां विषये विचारः कार्यः" इति–तदनुसारेण साताराराजधानीस्थैः सर्वैर्ब्राह्मणैः कूडली ( लगी ) मठीयपीठाधिपत्यविषयकदेशाधिकारविचारे प्रवर्तिते कूडलीमठीयपीठाधिपानां देशान्तरेषु सञ्चाराधिकारो नेति, तथा तेषामत्रागमनेन कूडलीमठीयपीठाधिकारिणां स्वामिनामुत्तरस्यां दिशि तुङ्गभद्रानदीमारभ्य मलापहारिणीनदीपर्यन्त एव देशे श्रीमतां सञ्चारेऽधिकारो नोत्तरत्रेति, तथा तेषां पादपूजादिकं केनापि ब्राह्मणेन न कार्यमिति च सर्वैर्ब्राह्मणैर्व्यवस्थाकारि, तथैव तैः स्थेयं नान्यथेति मयापि पादपूजा न क्रियते नातोऽधिको विशेषो लेख्योऽस्ति' इतीयं विज्ञप्तिः।

## करवीरशृङ्गेर्यादिमठाधिपाचार्याधिकारमर्यादा–

( 'धार्मिकविचाराचें कार्य' इत्येतन्नामके करवीरजगद्गुरुसंस्थानसर्वाधिकारिणा 'गुण्डो सखारामपिशवीकर' नाम्ना प्रकाशिते पुस्तके– )

( १ )–"श्री-"

"राजश्रीविराजितराजमान्यराजश्री परशुराम रामचन्द्र स्वामी गोसावी इत्येतेषां पोष्य माधवराव नारायण–प्रधानेन कृता प्रणामपूर्वा विज्ञप्तिः । अत्र कुशलं ज्ञात्वा तत्रत्यं कुशलं लेख्यम् ।

गोकर्णादारभ्य कोंकणपर्यन्तं वा मलापहारिनद्युद्गमप्रदेशादारभ्य सङ्गमं प्राप्य तुलजापुर, नागपुर, ग्वाल्हेर, देहल्यादिद्वारोत्तरदेशं प्रति गन्तव्यमार्गानुसारेण सर्वेषु देशेषु सञ्चारेऽधिकारः करवीरमठीयपीठाधिपानामेव नान्येषामिति स्थिते कर्नाटक ( राज्य ) स्थ शृङ्गेरी (मठीय) श्रीशङ्कराचार्या मलापहारिनदीमुत्तीर्यास्मदधिकारस्थानमागत्य लोकान्व्याकुलीकुर्वन्तीत्यस्माभिरवगतम् । शृङ्गेर्यादिमठीयपीठाधिपशङ्कराचार्येभ्यो नव्यपद्धतिप्रसारायावकाशमदत्त्वा करवीरमठीयपीठाधिपश्रीशङ्कराचार्यैः प्राचीनपरम्परागतपद्धत्यनुसारेण स्थातव्यम् । चन्द्र १५ जमादिलावल सुरुसन आरवासमानीनमया व आलफ । नान्तोऽधिको लेख्यो विशेष इति विज्ञप्तिः ।"

(१) अत्र संवत्सरनिर्देशो नास्तीत्यनेन कालस्य निर्णेतमशक्यत्वेपि शाहूछत्रपतिसमय एवास्यापि समय इति समयो ज्ञातु शक्यः ।

( २ )—"श्रीः" "सन् (कैसरे) १८६२"

"श्रीमत्सकलधर्मसंस्थापनैकत्यादिभिर्नान्यप्रशस्तिपत्रम्—

चरणरजः (रजायित) चिमणाजी रघुनाथ सचिवकृतसाष्टाङ्गनमस्कारपूर्विका विज्ञापना— आषाढशुक्ल २ पर्यन्तं श्रीस्वामिनां कृपावलोकनेन सेवकस्य स्थितिर्यथावदास्ते । विशेषस्तु शालिवाहन १७८३ तमवर्षस्य भाद्रपदकृष्ण २ यायां श्रीस्वामिभिः प्रेषितं पत्र-(श्रीमुख) सुत्तमसमये लब्धमिति परं तुष्टोऽस्मि । "उत्तरप्रान्ते आचारव्यवहारप्रायश्चित्तादिज्ञातिधर्मे पूजापाद्यादिग्रहणे च श्रीमतामेवाधिकार" इति 'नारो आवजी वकील' इत्याख्येभ्यः पत्रं प्रेषितं तथापि "सम्प्रदायानुरोधेन प्रायश्चित्तादिकं कारयित्वा शिष्यवर्गसन्तोषानुरोधेन शिष्यैर्दत्तानां पूजाद्रव्यादिकानां ग्रहणाय साह्यकरणे सम्यग्यत्न आस्थेयो युष्माभिः । शृङ्गेरीकूडलगीरमणीमठपर्यायगतश्रीशङ्कराचार्याणां तत्राधिकाराभावेऽपि तैस्तद्ग्रहणे यत्न आस्थितश्चेत्तर्ह्यवहितैर्युष्माभिस्तत्र तथा तेषां प्रवेशो यथा न स्यात्तथा विधेयम् । तस्मात् श्रीमदाचार्याणामाज्ञानुरोधेन तत्रत्यप्रजानां बोधने यत्न आस्थेयो युष्माभिः" इति मामलेदार नाम्नाऽधिकारिणे आज्ञा दत्तेति सेवा श्रुता स्यादिति विज्ञप्तिः इति । शिष्टं परिशिष्टे स्फुटीभविष्यतीति दिक् ।

## मठीयश्रीमुखविरुदावलीभेदाः—

श्रीकाञ्चीकामकोटिपीठाधिप.नाम्—चन्द्रमौलीश्वर ।

श्री.
चन्द्रमौलीश्वराय नमः
श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीमच्छङ्करभगवत्पादप्रतिष्ठितश्रीका-
मकोटिपीठाधिपश्रीमहादेवेन्द्रसरस्व
तीस्वामीन्द्रो विजयते ।

"स्वस्ति श्रीमदखिलभूमण्डलालङ्कारत्रयस्त्रिंशत्कोटिदेवतासेवितश्रीकामाक्षीदेवीसनाथश्रीमदेकाम्रनाथश्रीमहादेवीसनाथश्रीहस्तिगिरिनाथसाक्षात्कारपरमाधिष्ठानसत्यव्रतनामाङ्कितकाञ्चीदिव्यक्षेत्रे शारदामठसुस्थितानामतुलितसुधारसमाधुर्यकमलासनकामिनीधम्मिल्लसंफुल्लमल्लिकामालिकानिष्यन्दमकरन्दझरीसौवस्तिकवाङ्निगुम्भविजृम्भणानन्दतुन्दिलितमनीषिमण्डलानामनवरताद्वैतविद्याविनोदरसिकानां निरन्तरालङ्कृतीकृतशान्तिदान्तिभूम्नां सकलभुवनचक्रप्रतिष्ठापकश्रीचक्रप्रतिष्ठाविख्यातयशोऽलङ्कृतानां निखिलपाषण्डकण्टकोद्घाटनेन विशदीकृतवेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचार्याणां श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीमच्छङ्करभगवत्पादाचार्याणामधिष्ठाने सिंहासनाभिषिक्तश्रीमच्चन्द्रशेखरसरस्वतीसंयमीन्द्राणामन्तेवासिवर्यश्रीमन्महादेवेन्द्रसरस्वतीश्रीपादैः"

पप्रसङ्गः ॥ अथ शक्तय एव कार्यवैचित्र्यसूचिता अवयवा इत्यभिप्रायः । तास्तु ब्रह्मवादिनोऽप्यविशिष्टाः । तथाऽणुवादिनोऽप्यणुरण्वन्तरेण संयुज्यमानो निरवयवत्वाद्यदि कार्त्स्न्येन संयुज्येत, ततः प्रथिमानुपपत्तेरणुमात्रत्वप्रसङ्गः ॥ अथैकदेशेन संयुज्येत, तथापि निरवयवत्वाभ्युपगमकोप इति स्वपक्षेऽपि समान एष दोषः ॥ समानत्वाच्च नान्यतरस्मिन्नेव पक्षे उपक्षेप्तव्यो भवति ॥ परिहृतस्तु ब्रह्मवादिना स्वपक्षे दोषः ॥ २९ ॥ इति कृत्स्नप्रसक्त्यधिकरणम् ॥ ९ ॥

---

रत्नप्रभा ।

तास्तद्गतास्शक्तय इत्याशङ्क्य मायिकशक्तिभिर्ब्रह्मणोऽपि सावयवत्वं तुल्यमित्याह—अथेत्यादिना ॥ अणुवादेऽपि दोषसाम्यमाह—तथेति ॥ स्वपक्षेऽपि समान इति सम्बन्धः ॥ निरवयवयोः परमाण्वोः संयोगो व्याप्यवृत्तिरव्याप्यवृत्तिर्वा ? आद्ये तत्कार्यस्य द्व्यणुकस्यैकपरमाणुमात्रत्वापत्तिः । प्रथिम्नोऽधिकपरिमाणस्यानुपपत्तेः । न ह्यणोरण्वन्तरेणोपर्यधः पार्श्वतश्च व्याप्तौ ततोऽधिकद्रव्यं सम्भवति । द्वितीये परमाण्वोः सावयवत्वापत्तिरित्यर्थः । ननु न चोर इत्युक्ते त्वमपि चोर इति दोषसाम्योक्तिरयुक्तेत्यत आह—परिहृतस्त्विति ॥ उक्तं हि मायावादे स्वप्नवत्सर्वं सामञ्जस्यम् । अतो निरवयवे ब्रह्मणि

भामती ।

प्रसङ्गः । एकदेशपरिणामे वा सावयवत्वमनिष्टं प्रसज्येत । तथाऽणुवादिनोऽपीति । वैशेषिकाणां ह्यणुभ्यां संयुज्य द्व्यणुकमेकमारभ्यते, तैस्त्रिभिर्द्व्यणुकैस्त्र्यणुकमेकमारभ्यत इति प्रक्रिया । तत्र द्वयोरण्वोरनवयवयोः संयोगस्तावत् व्याप्नुयात् । अव्याप्नुवन्वा तत्र न वर्तेत । न ह्यस्ति सम्भवः स एव तदानीं तत्र वर्तते न वर्तते चेति । तथा चोपर्यधःपार्श्वस्थाः षडपि परमाणवः समानदेशा इति प्रथिमानुपपत्तेरणुमात्रः पिण्डः प्रसज्येत । अव्याप्तौ वा षडवयवः परमाणुः स्यादित्यनवयवत्वव्याकोपः । अवयवे च सावयवत्वमुपेतु, तथा ह्यनन्तावयवत्वेन सुमेरुराजसर्षपयोः समानपरिमाणत्वप्रसङ्गः । तस्मात् समानो दोषः । आपातमात्रेण साम्यमुक्तम्, परमार्थतस्तु मायिकं परिणामं वा कार्यकारणभावं चेच्छतामेव दुर्वारो दोषो न पुनरस्माकं मायावादिनामित्याह—परिहृतस्त्विति ॥२९॥ (९)॥ विचित्रशक्तियुक्तं ब्रह्मणः, तत्र श्रुत्युपन्या-

आनन्दगिरीय—न्यायनिर्णयः ।

त्वासम्भवोऽपि गृहीत । घटादीनामिव द्रव्यावयवत्वेन प्रधानस्य सावयवत्वानभ्युपगमादनेकधर्मवत्तया तद्विकारानित्यत्वादिदोषप्रसक्तिरित्याह—अथेति । ब्रह्मणोऽपि कार्यवैचित्र्यसूचितविचित्रशक्तिरूपावयवोपगमादुक्तदोषसमाधिरित्याह—ता इति । प्रधानवादिनो दोषसाम्यमुक्त्वा परमाणुवादिनोऽपि तत्साम्यमाह—तथेति । अणुवादिनोऽपि समान एव दोष इत्यत्र सम्बन्धः । द्वाभ्यामणुभ्यां संयुज्यमानाभ्यां द्व्यणुकमारभ्यते त्रिभिर्द्व्यणुकैः संयुक्तैस्त्र्यणुकं त्र्यणुकैः संयुक्तैश्चतुरणुकमित्यस्यां प्रक्रियायामणुरण्वन्तरेण संयुज्यमानः कार्त्स्न्येन वा संयुज्यते एकदेशेन वेति विकल्प्याऽऽद्यमनूद्य दूषयति—अणुरिति । कार्त्स्न्येन संयोगे संयोगिनोरेकदेशत्वात् परमाण्वन्तरस्य सन्निधानात्तदारब्धे द्व्यणुके परमाणोरधिकपरिमाणाभावात्तस्यापि परिमाणाभावप्रसङ्गाद्द्व्यणुकादिपरिमाणानामयोगात्तदारम्भकाणां निरवयवत्व स्यादित्यर्थः । द्वितीयमनूद्य प्रत्याह—अथेति । तदेव परमाणुवादिष्वपि प्रागुक्तदोषसाम्यात् तेनापि प्रधानवादिना तदुद्भावनमनुचितमित्याह—इति स्वपक्षेऽपीति । त्वं चोर इत्युक्ते त्वमपि चोर इति परस्य दोषोद्भावने परस्यापि तदुद्भावनमात्रेण न स्वपक्षसिद्धिरिति वादकथा दृष्टव्यः परिहारः स एवास्माकमपीत्याह—समानत्वाच्चेति । आपाततः साम्यमुक्त्वा परमार्थतः कार्यकारणपरिणामेन पाप दोषो नास्माकं विवर्तवादिनां वादे परस्य च कल्पितत्वादित्याह—परिहृतस्त्विति ॥ २९ ॥ ( ९ ) ॥ पूर्वाधिकरणे ब्रह्मणो विचित्र-

## सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ ( १० ) ॥

एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते, विचित्रो विकारप्रपञ्च इत्युक्तम् ॥ तत्पुनः कथमवगम्यते विचित्रशक्तियुक्तं परं ब्रह्मेति ॥ तदुच्यते ॥ सर्वोपेता च तद्दर्शनात्। सर्वशक्तियुक्ता च परा देवतेत्यवगन्तव्यम्॥कुतः ॥"तद्दर्शनात्"तथाहि–दर्शयति श्रुतिः सर्वशक्तियोगं परस्या देवतायाः–" सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" [ छां० ३ । १४ ।४] "सत्यकामस्सत्यसङ्कल्पः" [ छां० ८। ७। १ ]"यः सर्वज्ञः सर्ववित्" [ मुण्ड० १।१। ९ ] "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" [ बृ० ३ । ८ । ९ ] इत्येवञ्जातीयका ॥ ३० ॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३१ ॥

रत्नप्रभा।

समन्वयस्याविरोध इति सिद्धम् ॥ २९ ॥ ( ९ ) ॥ सर्वोपेता। मायाशक्तिमतो ब्रह्मणो जगत्सर्गं वदतः समन्वयस्य अशरीरस्य न मायेति न्यायेन विरोधोऽस्ति न वेति सन्देहे न्यायस्य अनाभासत्वादस्तीति पूर्वपक्षे पूर्वोक्तशक्तिमत्त्वसमर्थनादेकविषयत्वं सङ्गतिं वदन् सिद्धान्तमत्र व्याचष्टे–एकस्येत्यादिना ॥ पूर्वोत्तरपक्षयोर्विरोधाविरोधौ फलमित्युक्तमेवापादसमाप्तेरवगन्तव्यम्। अभ्यात्तः अभितो व्याप्तः। अवाकी वागिन्द्रियशून्यः। अनादरः निष्कामः ॥ ३० ॥ पूर्वपक्षन्यायमनूद्य दूषयति–विकरणत्वादिति ॥ देहादिचेतनानां शक्तानामपि देहाभिमाने सत्येव कर्तृत्वं दृष्टम्। तदभावे सुषुप्तौ तन्न दृष्टम् अतो ब्रह्मण शक्तत्वेऽप्यदेहत्वान्न कर्तृत्वम्। नाप्यदेहस्य शक्तिः सम्भवतीति शङ्कार्थः। निष्करणस्य जीवस्य कर्तृत्वासम्भवेऽपीश्वरस्य सम्भवतीति "देवादिवदपि लोके" [ ब्र० सू० २। १। २५ ] इत्यत्रोक्तम्। अशरीरस्य कल्पितस्य मायाश्रयत्वायोगात् निर्विशेषचिन्मात्रस्यैव मायाधि-

भामती।

सपर सूत्रम्–सर्वोपेता च तद्दर्शनात् ॥ ३० ॥ एतदाक्षेपसमाधानपरं सूत्रम्–विकरणत्वान्नेति चेत्तदुक्तम्। कुलालादिभ्यस्तावद्बाह्यकरणापेक्षेभ्यो देवादीनां बाह्यानपेक्षाणामप्यन्तरकरणापेक्षसृष्टीनां प्रमाणेन दृष्टो यथा विशेषो नापह्नोतुं शक्यः, यथा तु जाग्रदुपदर्शनकरणापेक्षायास्तदनपेक्षान्तःकरणमात्रसाध्या दृष्टा स्वप्ने रथादिसृष्टिरशक्यापह्नोतुम्, एवं सर्वशक्तेः परस्या देवताया अन्तःकरणानपेक्षाया जगत्सर्जन

आनन्दगिरीय–न्यायनिर्णयः।

शक्तियुक्तत्वात्मुक्तं कारणत्वमित्युक्तम्। इदानीं तस्य विचित्रशक्तित्वे प्रमाणमाह–सर्वोपेता चेति। मायाशक्तिमतो ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयस्तस्य किमशरीरस्य नास्ति मायेति न्यायेन विरोधोऽस्ति न वेति तन्न्यायस्याभासत्वानाभासत्वाभ्यां सन्देहे सिद्धान्तमाह–एकस्येति। प्रमाणप्रश्नपूर्वकं तदुपन्यासपरं सूत्रमादत्ते–तत्पुनरिति। पूर्ववदिहापि सगतिफले द्रष्टव्ये। सूत्राक्षराणि व्याचष्टे–सर्वेति। अवगतिहेतुप्रश्नपूर्वकमाह–कुत इति। सिद्धान्तहेतुं नानाविधश्रुत्युपन्यासेन विवृणोति–तथा हीति ॥ ३० ॥ पूर्वपक्षमनुभाष्य दूषयति–विकरणत्वादिति। यद्यप्यन्तर्यामिविकरणे जगदुत्पत्तिसामर्थ्यं सिद्धे कार्यकरणविशिष्टोऽपि विषयकृत्त्वमुक्तं तथाऽपि कार्यकरणविशिष्टो मायाधारः परं न सम्भवतीति विकरणत्वात् कुलालादीनां कार्यकरणवतां सृष्टावधिकारदर्शनादस्य नाधिष्ठातृत्वेन करणवत्त्व-

स्यादेतत्–विकरणां परां देवतां शास्ति शास्त्रम्–"अचक्षुष्कमश्रोत्रमवागमनाः" [ बृ० ३ । ८ । ८ ] इत्येवञ्जातीयकम् । कथं सा सर्वशक्तियुक्तापि सती कार्याय प्रभवेत् । देवादयो हि चेतनास्सर्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्यकरणसम्पन्ना एव तस्मैतस्मै कार्याय प्रभवन्तो विज्ञायन्ते ॥ कथं च "नेतिनेति" [ बृ० ४ । ५ । १५ ] इति प्रतिषिद्धसर्वविशेषाया देवतायास्सर्वशक्तियोगस्सम्भवेदिति चेत् ॥ यदत्र वक्तव्यं तत्पुरस्तादेवोक्तम् । श्रुत्यवगाह्यमेवेदमतिगम्भीरं परं ब्रह्म । न तर्कावगाह्यं न च यथैकस्य सामर्थ्यं दृष्टं, तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽस्तीति ॥ प्रतिषिद्धसर्वविशेषस्यापि ब्रह्मणस्सर्वशक्तियोगस्सम्भवतीत्येतदप्यविद्याकल्पितरूपभेदोपन्यासेनोक्तमेव ॥ तथा च शास्त्रम् "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" [ श्वेता० ३।१९ ] इत्यकरणस्यापि ब्रह्मणस्सर्वसामर्थ्ययोगं दर्शयति ॥३१॥
॥ इति सर्वोपेताधिकरणम् ॥ १० ॥

## न प्रयोजनवत्त्वात् ॥ ३२ ॥ ( ११ ) ॥

---

रत्नप्रभा ।

ष्टान्त्य युक्तमिति समाधानार्थः ॥ ३१ ॥ ( १० ) ॥ न प्रयोजनवत्त्वादिति ॥ परितृप्तस्य ब्रह्मणो

भामती ।

श्रूयमाणं न सामान्यतो दृष्टमात्रेणापह्नवमर्हतीति ॥३१॥(१०)॥ न प्रयोजनवत्त्वात् । न तावदुन्मत्तवदस्य मतिविभ्रमाज्जगत्प्रक्रिया, भ्रान्तस्य सर्वज्ञत्वानुपपत्तेः । तस्मात् प्रेक्षावतानेन जगत् कर्तव्यम् । प्रेक्षाव-

आनन्दगिरीय–न्यायनिर्णयः ।

मिति चोद्यं विवृणोति–स्यादेतदिति । ब्रह्मणः सर्वशक्तित्वादकार्यकरणत्वेऽपि कारणत्वमुपपन्नमित्याशङ्क्याऽऽह–कथं सेति । न हि कार्यकरणरहितस्य मुक्तस्य मायाशक्तिमत्त्वं तद्वत्त्वेऽपि न कार्यक्षमत्वं सुषुप्तवदित्यर्थः । सर्वशक्तियोगाद्देवादिवद्ब्रह्मणः संभवति विचित्रकार्यकरत्वमित्याशंक्याह–देवादयो हीति । विज्ञायन्ते मन्त्रार्थवादादिष्विति शेषः । कथं सा सर्वशक्तियुक्ताऽपीत्यत्रापि ना सूचितमर्थं स्फोरयति–कथं चेति । 'तदुक्तम्' इति सूत्रावयवेन परिहरति–यदत्रेति । किं तदुक्तमित्यपेक्षायां नविलक्षणत्वाधिकरणादावुक्तं स्मारयति–श्रुतीति । यत्तु कुलालादीनां कार्यकरणवतामेव मृदाद्यधिष्ठातृत्वोपलम्भाद्ब्रह्मणस्तद्रहितस्य नाधिष्ठातृत्वेन कारणत्वमिति तदपि परिहृतमित्याह–न चेति । न हि कार्यकारणविरहिणः सुषुप्तवदकार्यकरत्वं शक्यं नियन्तुं समुत्थानसमये शरीराद्यभिमानशून्यस्य देहेन्द्रियाद्युपादानव्यापारतत्स्थितिमतोपलब्ध्या दृष्टान्तस्य साध्यविकलत्वादिति भावः । यत्तु ब्रह्मणो मायाशक्तिमत्त्वं मुक्तवदशरीरत्वादयुक्तमिति तदपि पुरस्तादेव परास्तमित्याह–प्रतिषिद्धेति । परमार्थतो व्यवहारतो वा मायाशक्तिमत्त्वाभावः साध्यते । नाऽऽद्यः, सिद्धसाधनत्वात् न द्वितीयः, मायायाश्चिन्मात्रे प्रतीतिसिद्धत्वात् । न चाशरीरत्वमिति प्रतीतिर्जीवमधिकरोति तस्य ब्रह्मानतिरेकात्कल्पितस्य चाविद्यामयत्वेन मिथ्यात्वयोगादिति भावः । किंच, मायाविनो देहेन्द्रियवतो बाह्यं हेतुमनपेक्ष्य कार्यकरत्वदर्शनात्कुलालादीनां च तपस्विनामेव बाह्यसाधननिरपेक्षाणां सर्वक्रियाकारित्वाच्च दर्शनाद्ब्रह्मणोऽन्तरेणापि शरीरादिना प्रवृत्तिमायावत्त्वसिद्धिरित्यभिप्रेत्य प्रागुक्तानुमानदृष्टान्ताऽऽगमविरोधं दर्शयति–तथा चेति ॥ २१ ॥ ( १० ) ॥
एवं शब्दप्रमाणेन [illegible] भवति [illegible] प्रयोजनाभिसन्धानाभावादकर्तृत्वमित्याशङ्क्याह–
न प्रयोजनवत्त्वादिति । परिपूर्णस्य [illegible] जगत्सर्गे [illegible] विषयः न हि [illegible] विना [illegible] न

अन्यथा पुनश्चेतनकर्तृकत्वं जगत आक्षिपति—न खलु चेतनः परमात्मेदं जगद्बिम्बं विरचयितुमर्हति ॥ कुतः ॥ प्रयोजनवत्त्वात्प्रवृत्तीनाम् ॥ चेतनो हि लोके बुद्धिपूर्वकारी पुरुषः प्रवर्तमानो न मन्दोपक्रमामपि तावत्प्रवृत्तिमात्मप्रयोजनानुपयोगिनीमारभमाणो दृष्टः किमुत गुरुतरसंरम्भाम् ॥ भवति च लोकप्रसिद्ध्यनुवादिनी श्रुतिः "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति । आत्मनस्तु कामाय सर्वं प्रियं भवति" [बृ० २।४।५] इति ॥ गुरुतरसंरम्भा चेयं प्रवृत्तिः यदुच्चावचप्रपञ्चं जगद्बिम्बं विरचयितव्यम् ॥ यदीयमपि प्रवृत्तिश्चेतनस्य परमात्मन आत्मप्रयोजनोपयोगिनी परिकल्प्येत, परितृप्तत्वं परमात्मनः श्रूयमाणं बाध्येत ॥ प्रयोजनाभावे वा प्रवृत्त्यभावोऽपि स्यात् ॥ अथ चेतनोऽपि सन्नुन्मत्तो बुद्ध्यपराधादन्तरेणैवात्मप्रयोजनं प्रवर्तमानो दृष्टः । तथा परमा-

---

रत्नप्रभा ।

जगत्सर्गं वदन् समन्वयो विषयः । स किमभ्रान्तश्चेतनो यः स निष्फलं वस्तु न रचयतीति न्यायेन विरुध्यते न वेति सन्देहे पूर्वसंदेहस्यापि श्रुतिबलात् शास्त्रयोनितया कर्तृत्वमुक्तम् । तदाक्षेपसङ्गत्या पूर्वपक्षसूत्रं व्याचष्टे—अन्यथेत्यादिना ॥ ईश्वरस्य फलाभावेऽपि परप्रयोजनाय सृष्टौ प्रवृत्तिरस्त्वित्याशङ्क्य श्रुतिमाह—भवति चेति ॥ या प्रेक्षावत्प्रवृत्तिः सा स्वफलार्थेति लोकप्रसिद्धिः । न च दयालुप्रवृत्तौ व्यभिचारः । तस्या अपि परदुःखासहनप्रयुक्तस्वचित्तव्याकुलतानिवृत्त्यर्थत्वादिति भावः । किञ्च गुरुतरायासस्य फलं वाच्यमित्याह—गुरुतरेति ॥ तर्हि अस्त्वीश्वरस्यापि प्रवृत्तिः स्वार्थेत्यत आह—यदीयमपीति ॥ अस्वार्थत्वे प्रवृत्त्यभावः पूर्वोक्तः स्यादित्यर्थः । ईश्वरः प्रेक्षावान्न भवतीत्याशङ्क्य श्रुतिविरोधमाह—अथेत्यादिना ॥ बुद्धेरपराधो विवेकाभावः ॥ ३२ ॥ उक्तन्यायस्य राज्ञां लीलायां

भामती ।

तथा प्रवृत्तिः स्वपरहिताहितप्राप्तिपरिहारप्रयोजना सती नाप्रयोजनाल्पायासापि सम्भवति, किं पुनरपरिमेयानेकविधोच्चावचप्रपञ्चजगद्बिम्बविरचना महाप्रयासा । अत एव लीलापि परास्ता । अल्पायाससाध्या हि सा । न चेयमप्यप्रयोजना, तस्या अपि सुखप्रयोजनवत्त्वात् । तादर्थ्येन वा प्रवृत्तौ तदभावे कृतार्थत्वानुपपत्तेः । परेषां चोपकार्याणामभावेन तदुपकाराया अपि प्रवृत्तेरयोगात् । तस्मात् प्रेक्षावत्प्रवृत्ति

आनन्दगिरीय-न्यायनिर्णय ।

सृष्टा यदभ्रान्तचेतनत्वाद्विवक्षितपुरुषादिति न्यायेन विरुध्यते न वेति पूर्वसंदेहे सदृहे पूर्वपक्षसूत्रतात्पर्यमाह—अन्यथेति । पादादिसङ्गतिरस्य पूर्ववदुन्नेया । सूत्राक्षराणि व्याकुर्वन्नर्थमाह—न खल्विति । तत्र प्रश्नपूर्वकं हेतुमादाय व्याचष्टे—कुत इति । भ्रान्तस्याबुद्धिपूर्वकारिणः स्वपरप्रयोजनानुपयोगिन्यपि प्रवृत्तिः स्यादिति विशिनष्टि—बुद्धिपूर्वकारीति । लोकादौ फलाभावेऽपि प्रवृत्तिर्दृश्यते तथापि तासां मुख्यफलाभावेऽपि फलमस्त्येवेति मत्वाऽऽह—न मन्देति । या चेतनस्याभ्रान्तस्य प्रवृत्तिः सा फलाभिसन्धिपूर्विकेति व्याप्तिमुक्त्वा कैमुतिकन्यायवशेन सूचितं दर्शयति—किमुतेति । लीलादेरल्पायाससाध्यत्वेऽपि फलवत्त्वदर्शनान्महायाससाध्यजगत्सृष्टिः फलं विना न सिध्येदित्यर्थः । फलाभिसन्धिपूर्विका बुद्धिपूर्वकारिणः प्रवृत्तिरित्यत्र श्रुतिमुदाहरति—भवति चेति । प्रवृत्त्याभासवाञ्जगद्विरचनायां न फलापेक्षेत्याशङ्क्याऽऽह—गुरुतरेति । अस्तु तर्हि फलाभिसन्धिपूर्विकैवेयमपि प्रवृत्तिरीश्वरस्य तस्य फलस्य वा मुख्यमिति विकल्प्याऽऽद्ये दोषमाह—यदीति । अस्मदादीनां गुरुतरसंरम्भाऽपि प्रवृत्तिर्विफलानायासमात्रा न प्रयोजनपूर्विकेत्याशङ्क्य प्रधानं न जगत्कारणं साक्षात्परस्य वा स्वतन्त्रविफलत्वात्तथाभूतात्मेति पुरुष-द्वितीयाह—प्रयोजनाभावे वेति । दृष्टान्तेन शङ्कयित्वा दूषयति—अथेत्यादिना । बुद्धापराधो विवेक-

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ ३४ ॥ ( १२ ) ॥

पुनश्च जगज्जन्मादिहेतुत्वमीश्वरस्याक्षिप्यते स्थूणानिखननन्यायेन–प्रतिज्ञातस्यार्थस्य दृढीकरणाय ॥ नेश्वरो जगतः कारणमुपपद्यते ॥ कुतः ॥ वैषम्यनैर्घृण्यप्रसङ्गात्–कांश्चिदत्यन्तसुखभाजः करोति देवादीन्, कांश्चिदत्यन्तदुःखभाजः पश्वादीन्, कांश्चिन्मध्यमभोगभाजो मनुष्यादीनित्येवं विषमां सृष्टिं निर्मिमाणस्येश्वरस्य पृथग्जनस्येव रागद्वेषोपपत्तेः श्रुतिस्मृत्यवधारितस्वच्छत्वादीश्वरस्वभावविलोपः प्रसज्येत ॥ तथा खलजनैरपि जुगुप्सितं निर्घृणत्वमतिक्रूरत्वं दुःखयोगविधानात्सर्वप्रजोपसंहरणाच्च प्रसज्येत ॥ तस्माद्वैषम्यनैर्घृण्यप्रसङ्गान्नेश्वरः कारणमिति॥एवं प्राप्ते

---

रत्नप्रभा ।

औदासीन्येनार्थवत्त्वादिमुक्तं न विस्मर्तव्यमित्यर्थः ॥ ३३ ॥ ( ११ ) ॥ वैषम्यनैर्घृण्ये नेति ॥ निर्दोषाद्ब्रह्मणो जगत्सर्गं ब्रुवन् समन्वयो विषयः । स किं "यो विषमकारी स दोषवान्" इति न्यायेन विरुध्यते, न वेति, सन्देहे पूर्वत्र लीलया, स्रष्टृत्वमुक्तं, तदेव कर्मादिसापेक्षस्य न युक्तम् । अनीश्वरत्वापत्तेः, निरपेक्षत्वे रागादिदोषापत्तेः, इत्याक्षेपसङ्गत्या पूर्वपक्षयति–पुनश्चेत्यादिना ॥ ब्रह्मैव जगत्कारणमिति जन्मादिसूत्रे प्रतिज्ञातोऽर्थः । पृथग्जनः पामरः । 'निरवद्यं निरञ्जनम्' इति श्रुतिः, 'न मे द्वेष्योऽस्ति न प्रियः' इति स्मृतिः ॥ स्वच्छत्वादीति । आदिपदेन कृपालुत्वग्रहः । स्वच्छत्वादिरेव ईश्वरस्वभावस्तस्येति विग्रहः । निमित्तानपेक्षस्य विषमकारित्वे वैषम्यादिदोषः स्यात् तदपेक्षत्वे [illegible] नास्तीति सिद्धान्तयति–एवं प्राप्त इत्यादिना ॥ न च सापेक्षत्वे अनीश्वरत्वम्, सेवासापेक्षस्य फलदातरि

भामती ।

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति।अतिरोहितोऽत्र पूर्वः पक्षः । उत्तरसूत्रं पठति–उभयथा [illegible] प्राणभृद्दोषाननपुण्यकर्माशयसहायस्याभवतः परमेश्वरस्य न वैषम्यनैर्घृण्ये प्रसज्येते।न हि सभ्यः सभायां नियुक्तो युक्तवादिनं युक्तवादिनं चायुक्तवादिनमयुक्तवादीति ब्रुवाणः, सभापतिर्वा युक्तवादिनमनुगृह्णन्नयुक्तवादिनं च निगृह्णन्द्विष्टो वा भवत्यपि तु मध्यस्थ इति वीतरागद्वेष इति चाख्यायते,तद्वदीश्वरः पुण्यकर्माणमनुगृह्णन्पापकर्माणं

आनन्दगिरीय–न्यायनिर्णयः ।

पूर्वसूत्रे मायामय्या लीलया ब्रह्मणः स्रष्टृत्वमादिष्टं सम्प्रति तदेव सापेक्षस्य न सम्भवत्यनीश्वरत्व-प्रसङ्गान्निरपेक्षत्वे रागादिमत्त्वापत्तेरित्याक्षिप्य समाधत्ते–वैषम्येति । निरवद्याद्ब्रह्मणो जगत्सर्गं ब्रुवन्समन्वयो विषयः स किं यो विषमसृष्टिकारी स सावद्यो यथा न विषम सृजतीति न्यायेन विरुध्यते न वेति सन्देहे पूर्वपक्षमाह–पुनश्चेति । पुनराक्षेपस्य फलमाह–स्थूणेति । जगतो ब्रह्मैव कारणमिति प्रतिज्ञातोऽर्थस्तद्दृढीकरणमाक्षेपसमाधिविस्तरस्य फलमित्यर्थः । पादादिसङ्गतिस्तु पूर्ववदेव । अधिकरणं 'वैषम्यनैर्घृण्ये न' इति सूत्रावयवं पूर्वपक्षे योजयन्नर्थमाह–नेश्वर इति । प्रश्नपूर्वकं हेतुं गृहीत्वा प्रथमं वैषम्यप्रसङ्गं प्रकटयति–कुत इत्यादिना । देवादीनामेव वैषम्येऽपि कथमीश्वरस्य वैषम्यमित्याशङ्क्याह–इत्येवमिति । वैषम्येऽपि किं स्यादित्याशङ्क्योक्तम्–श्रुतीति । 'निष्कलं निष्क्रियम्' इत्याद्या श्रुतिः 'न मे द्वेष्योऽस्ति न प्रियः' । [illegible] कामरागविवर्जितम्' इत्याद्या च स्मृतिः । स्वच्छत्वादीत्यादिशब्देन [illegible] गृह्यते । वैषम्यप्रसङ्गं प्रदर्श्य नैर्घृण्यप्रसङ्गं दर्शयति–तथेति । अत्र [illegible] न कारणं [illegible] –अन्यथा [illegible] । [illegible] सिद्धान्तयति–एवं प्राप्त इति । प्रश्नपूर्वकं हेतुमाह–

भ्रमः । "वैषम्यनैर्घृण्ये न" ईश्वरस्य प्रसज्येते ॥ कस्मात् ॥ "सापेक्षत्वात्" । यदि हि निरपेक्षः केवल ईश्वरो विषमां सृष्टिं निर्मिमीते, स्यातामेतौ दोषौ वैषम्यं नैर्घृण्यं च ॥ न तु निरपेक्षस्य निर्मातृत्वमस्ति । सापेक्षो हीश्वरो विषमां सृष्टिं निर्मिमीते॥ किमपेक्षत इति चेत् ॥ धर्माधर्मावपेक्षत इति वदामः ॥ अतः सृज्यमानप्राणिधर्माधर्मापेक्षा विषमा सृष्टिरिति नायमीश्वरस्यापराधः । ईश्वरस्तु पर्जन्यवद्द्रष्टव्यः । यथा हि पर्जन्यो व्रीहियवादिसृष्टौ साधारणं कारणं भवति, व्रीहियवादिवैषम्ये तु तत्तद्बीजगतान्येवासाधारणानि सामर्थ्यानि कारणानि भवन्ति, एवमीश्वरो देवमनुष्यादिसृष्टौ साधारणं कारणं भवति देवमनुष्यादिवैषम्ये तु तत्तज्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति ॥ एवमीश्वरः सापेक्षत्वान्न वैषम्यनैर्घृण्याभ्यां दुष्यति ॥ कथं पुनरवगम्यते । सापेक्ष ईश्वरो नीचमध्यमोत्तमं संसारं निर्मिमीत इति । "तथा हि दर्शयति" श्रुतिः–"एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत एष उ एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते" [ कौषी० ३ । ८ ] इति ॥ "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" [ बृ० ४ । ४ । ५ ] इति च ॥ स्मृतिरपि प्राणिकर्मविशेषा-

रत्नप्रभा ।

रागीश्वरत्वानपायात् । ननु तर्हि धर्माधर्माभ्यामेव विचित्रा सृष्टिरस्तु, किमीश्वरेणेत्यत आह–ईश्वरस्त्विति ॥ साधारणहेतुसहितस्यैवासाधारणहेतोः कार्यकारित्वान्नेश्वरवैयर्थ्यम् । अन्यथा पर्जन्यवैयर्थ्यप्रसङ्गादिति भावः । यं जनम् । उन्निनीषते ऊर्ध्वं नेतुमिच्छति तं साधु कारयति, एष ईश्वर इत्यन्वयः ॥

भामती ।

न निगृह्णात्यपथ्य एव नामयस्य । एवं सताविमध्यस्थः स्वाश्रयकल्याणकारिणमनुगृह्णीयात् कल्याणकारिणं च निगृह्णीयात् । न त्वेवादस्ति । तस्मान्न वैषम्यदोषः । अत एव न नैर्घृण्यमपि सहरतः भगवान् प्राणभृतः । स हि प्राणभृत्कर्माशयानां वृत्तिनिरोधसमय, तमतिवर्तमानमयुक्तकारी स्यात् । न च कर्मापेक्षायामीश्वरस्य ऐश्वर्यव्याघातः । न हि सेवादिकर्मभेदापेक्षः फलभेदप्रदः प्रभुरप्रभुर्भवति । न च 'एष ह्येव साधु कर्म कारयति यमेभ्यो लोकेभ्य उन्निनीषते एष एवासाधु कर्म कारयति तं यमधो

आनन्दगिरीय–न्यायनिर्णयः ।

कस्मादिति । व्यतिरेकद्वारा विभजते–यदि हीति । नैरपेक्ष्यमेव व्याचष्टे–केवल इति । उक्तमेवार्थमन्वयमुखेनाचष्टे–सापेक्षो हीति । सापेक्षत्वे सत्यनीश्वरत्वमिति शिष्यमाशङ्कते–किमिति । सेवादिभेदापेक्षया राजादीनां फलदानेऽपि नानीश्वरत्वं दृष्टमिति मन्वान समाधत्ते–धर्मेति । सापेक्षत्वे फलं यदनुसन्धेयं तदाह–अत इति । विषमा सृष्टिर्धर्मादिनिमित्ता चेत् तर्हीश्वरेण व्यर्थताऽऽह–ईश्वरस्त्विति । दृष्टान्तं विवृणोति–यथा हीति । व्रीहियवादिवैषम्ये नहि पर्जन्यो व्यापारवानस्ति–व्रीहीति । चेतनत्वे सत्यनात्मत्वादिति हेतुं व्यभिचारयन्दार्ष्टान्तिकमाह–एवमिति । सेवादिभेदापेक्षया वैषम्यवर्णां कुर्वति राजादावनैकान्तिको हेतुरिति भावः । सापेक्षत्वफलमुपसंहरति–एवमिति । तथा चाऽऽगमाद्यतिक्रमेऽप्यनुपपत्त्यभावात् नैव महोऽस्मीति भावः । सापेक्षत्वेऽस्य विषमसृष्टिहेतुत्वे मानं पृच्छति–कथमिति । सूत्रावयवेनोत्तरमाह–तथाहीति । स्मृतिरपि श्रौतकर्मानुसारिणी चेत्याह–स्मृतिरपीति । न च साध्वसाधुनी कर्मणी कारयिता सर्वो नाम वा प्राणिनो तज्जीवस्य वैषम्यादिना कथ

पेक्षमेवेश्वरस्यानुग्रहीतृत्वं निग्रहीतृत्वं च दर्शयति "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" [ भ० गी० ४ । ११ ] इत्येवञ्जातीयका ॥ ३४ ॥

## न कर्माविभागादिति चेन्नाऽनादित्वात् ॥ ३५ ॥

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [ छां० ६ । २ । १ ] इति प्राक्सृष्टेरविभागावधारणान्नास्ति कर्म । यदपेक्ष्य विषमा सृष्टिः स्यात । सृष्ट्युत्तरकाले हि शरीरादिविभागापेक्षं कर्म, कर्मापेक्षश्च शरीरादिविभाग इतीतरेतराश्रयत्वं प्रसज्येत ॥ अतो विभागादूर्ध्वं कर्मापेक्ष ईश्वरः प्रवर्ततां नाम । प्राक् तु विभागाद्वैचित्र्यनिमित्तस्य कर्मणोऽभावात्तुल्यैवाद्या सृष्टिः प्राप्नोतीति चेत ॥ नैष दोषः ॥ अनादित्वात संसारस्य । भवेदेष दोषो यद्यादिमान्संसारः स्यात । अनादौ तु संसारे बीजाङ्कुरवद्धेतुहेतुमद्भावेन कर्मणः सर्गवैषम्यस्य च प्रवृत्तिर्न विरुध्यते॥३५॥

रत्नप्रभा ।

न च कश्चिज्जनं साधु, कश्चिदसाधु कर्म कारयतो वैषम्यं तदवस्थमिति वाच्यम् । अनादिपूर्वार्जितसाध्वसाधुवासनया स्वभावेन जनस्य तत्तत्कर्मसु प्रवृत्तावीश्वरस्य साधारणहेतुत्वात् । अतोऽनवद्य ईश्वर इति भावः ॥ ३४ ॥ प्रथमसर्गस्य वैषम्यहेतुकर्माभावादेकरूपत्वं स्यात, तथा तदुत्तरकल्पानामपीत्याक्षिप्य समाधत्ते सूत्रकारः—न कर्मेति ॥ प्रथमसृष्टेः पश्चाद्धानिकर्मेति न वैषम्यमित्याशङ्क्यान्योन्याश्रयमाह—सृष्ट्युत्तरेति ॥ आद्या सृष्टिरिति—उपलक्षणम् । आदावेकरूपत्वे मध्ये विषमकर्मोत्पत्तौ हेत्वभावेनोत्तरसृष्टीनामपि तुल्य

भामती ।

निनीषते' इति श्रुतेरीश्वर एव द्वेषपक्षपाताभ्यां साध्वसाधुनी कर्मणी कारयित्वा स्वर्गं नरकं वा लोकं नयति, तस्माद्वैषम्यदोषप्रसङ्गान्नेश्वरः कारणमिति वाच्यम्, विरोधात् । यस्मात् कर्म कारयित्वेश्वरः प्राणिनः सुकृतदुष्कृतिनः सृजति इति श्रुतेरवगम्यते, तस्मात् सृजतीति विरुद्धमभिधीयते । न च वैषम्यमात्रमत्र श्रुतो न त्वीश्वरकारणत्वव्यानिरास इति वाच्यम् । विरोधो यथैवम् । तस्मादीश्वरस्य सदसत्कर्मशापरामर्शमभिवदन्तीनां भूयसीनां श्रुतीनामनुग्रहायोन्निनीषतेऽसो निनीषत इत्येतदपि तज्जातीयपूर्वकर्माभ्यासवशात्प्राणिन इत्येवं नेयम् । यथाह—'जन्मजन्म यदभ्यस्तं दानमध्ययनं तपः । तेनैवाभ्यासयोगेन तदेवाभ्यसते नरः ॥' इति । अस्तु वा च सृष्टेस्तात्त्विकत्वमिदमुक्तम् । अनिर्वाच्या तु सृष्टिरिति न प्रश्नस्यावकाशः । तथा च मायाकारस्येवाज्ञसाकल्येन कृपमेदेन विचित्रान् प्राणिनो दर्शयतो न वैषम्यदोषः, सहसा सहस्रो वा न नैर्घृण्यम्, एवमस्यापि भगवतो विविधविचित्रप्रपञ्चमनिर्वाच्यं विश्वं दर्शयतः सहस्रशश्च स्वमायाद्वा लीलया वा न कश्चिद्दोषः ॥ ३४ ॥ इति स्थिते शङ्कापरिहारपरं सूत्रम्— न कर्माविभागादिति चेन्नानादित्वात् । शङ्कोत्तरे अविरोहितार्थेन भाष्यकारेण व्याख्याते ॥ ३५ ॥

आनन्दगिरीय—न्यायनिर्णय. ।

न दूषणमिति वाच्यम् । तज्जातीयपूर्वकर्माभ्यासात्तत्र प्रवृत्तानामीश्वरस्य प्रवर्तकत्वात्साधारणत्वेन तस्य मायामयसृष्टिहेतोर्वैषम्यादिप्रसङ्गाभावादिति भावः ॥ ३४ ॥ सापेक्षत्वमाक्षिप्य समाधत्ते—न कर्मेति । कीदृक्स्यादुक्तप्राचीनं पराचीनं वा कर्मविभागमिति । विकल्प्याद्यं दूषयति—सदेवेति । द्वितीयं निरस्यति—सृष्टीति । पराचीनं हि कर्म प्रथमसृष्टेरसृष्टौ हेतुरिति विकल्पार्थं परस्पराश्रयमनुमन्यते । इत्याह—अत इति । देवादिविभागात् कर्मणा वैषम्यं । सृष्टेरपेक्षत्व प्रतिज्ञा मूलादिति । ...पूर्वोक्तं प्रागविभागाद्वैषम्यं स्यादित्याह । सूत्रावयवं व्याचष्टे—नैष दोष इति । अत्र प्रकटयति—भवेदित्यादिना । सृष्टेर्वैषम्यं प्रागपि नानादिकर्मानु...

शरीरं सम्भवति ॥ न च शरीरमन्तरेण कर्म सम्भवतीतीतरेतराश्रयत्वप्रसंगः ॥ अनादित्वे तु बीजांकुरन्यायेनोपपत्तेर्न कश्चिद्दोषो भवति ॥ उपलभ्यते च संसारस्यानादित्वं श्रुतिस्मृत्योः । श्रुतौ तावद्—"अनेन जीवेनात्मना" [ छां० ६ । ३ । २ ] इति सर्गप्रमुखे शारीरमात्मानं जीवशब्देन प्राणधारणनिमित्तेनाभिलपन्ननादिस्संसार इति दर्शयति ॥ आदिमत्त्वे तु ततः प्रागनवधारितः प्राणस्सन्कथं प्राणधारणनिमित्तेन जीवशब्देन सर्गप्रमुखेऽभिलप्येत ॥ न च धारयिष्यतीत्यतोऽभिलप्येत ॥ अनागताद्धि सम्बन्धादतीतः सम्बन्धो बलीयान् भवति । अभिनिष्पन्नत्वात् ॥ "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्" [ महानारा० ५ । ७ ] इति च मन्त्रवर्णः पूर्वकल्पसद्भावं दर्शयति ॥ स्मृतावप्यनादित्वं संसारस्योपलभ्यते—"न रूपमस्येह तथोपलभ्यते नान्तो

रत्नप्रभा ।

प्राक् कर्मासम्भवात् । तस्मात्कर्मशरीरयोरन्योन्याश्रयपरिहाराय सर्वैरपि वादिभिः संसारस्यानादित्वमङ्गीकार्यमित्याह—न चेति ॥ सर्गप्रमुखे सृष्ट्यादौ प्राग्धारितप्राणोऽपि सन् प्रत्यगात्मप्राणधारणनिमित्तेन जीवशब्देनोक्ततामित्यत्राह—न च धारयिष्यतीति ॥ "गृहस्थः सदृशीं भार्यामुपेयात्" इत्यादावपि गृहस्थः भावित्वृत्त्याश्रयणमिति भावः । अस्य संसारवृक्षस्य स्वरूपं सत्यं मिथ्या वेत्युपदेशं विना नोपलभ्यते । ज्ञानं विनान्तोऽपि नास्ति । नाप्यादिरुपलभ्यते । असङ्गत्वेन न च सम्प्रतिष्ठा मध्ये स्थितिः । दृष्टनष्टस्वरूपत्वादिति गीतावाक्यार्थः । संसारस्यानादित्वेऽपि मिथ्यात्वात् "एकमेवाद्वितीयम्"

भामती ।

संसारदुःखमनुभावयन्ति क्लेशयन्तीति क्लेशास्तेषां वासनाः कर्मप्रवृत्त्यनुगुणास्ताभिराक्षिप्तानि प्रवर्तितानि कर्माणि तदपेक्षा उपलक्षणा अविद्या । स्यादेतत् । भविष्यतापि व्यपदेशो दृष्टो यथा 'पुरोडाशकपालेन तुषानुपवपति' इति । अत आह—न च धारयिष्यतीत्यत इति । तदेवमनादित्वे सिद्धे 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' इति प्राक् सृष्टेर्विभागाभावकारणं समुदाचरदुपरागादिनिरोधात् न पुनरत्यन्तमु-

आनन्दगिरीय—न्यायनिर्णयः ।

अस्तु तर्हि कर्मनिरपेक्षं शरीरं वैषम्यकारणं तत्राऽऽह—न च शरीरमिति । कथं तर्हि परस्पराश्रयत्वं परिहर्तुं पार्यते तत्राऽऽह—अनादित्वे त्विति । उपपत्तेर्हेतुफलभावस्येति शेषः । संसारस्यानादित्वसाधनयुक्तिनिरुक्तमानाभावे न तदुपपादयितुमपि शक्यमतः सूत्रावयवं व्याकरोति—उपलभ्यते चेति । संसारोऽनादिरिति येन श्रुतिस्मृती तेन दर्शयेत तत्कथमित्याशङ्क्य श्रौतं लिङ्गं संसारस्यानादित्वमावेदयति—श्रुतौ तावदिति । शारीरस्याऽऽत्मनः सर्गप्रमुखे प्राणधारणनिमित्तेन जीवशब्देन परामर्शात्प्रागपि तस्य भावात् इति कृत्वा संसारस्यानादित्वमिति व्याचष्टे—आदिमत्त्वे त्विति । प्रागनवधारितप्राणः सन्नात्मा शारीर इति शेषः । ननु भाविनीं वृत्तिमाश्रित्याऽऽत्मनि जीवशब्दो 'गृहस्थः सदृशीं भार्याम्' इतिवत्प्रवर्तिष्यति नेत्याह—न चेति । संसारस्यानादित्वे श्रौतं लिङ्गमुक्त्वाऽऽह—सूर्येति । यो इत्थं योऽस्मिन्नुपलभ्यते संसारस्यानादित्वमिति प्रतिज्ञाय भगवद्गीतासु तदुक्तं स्मार्तं लिङ्गमुदाहरति—स्मृताविति । अस्य संसारवृक्षस्य यथोक्तप्रकारं रूपं शास्त्राचार्योपदेशमृते न च ज्ञानं न चाप्युपलभ्यते । न चान्तोऽवसानमन्तरेण ब्रह्मविज्ञानं दृश्यते । आदिरपि नास्य ज्ञायते । संस्थितिः स्थितिर्मध्यं न चोपलभ्यते । अनित्यत्वादित्यर्थः । संसारस्यानादित्वे

न चादिर्न च सम्प्रतिष्ठा" [ भ० गी० १५। ३] इति ॥ पुराणे चातीतानामनागतानां च कल्पानां न परिमाणमस्तीति स्थापितम् ॥ ३६ ॥ इत्यवैषम्यनैर्घृण्याधिकरणम् ॥ १२ ॥

## सर्वधर्मोपपत्तेश्च ॥ ३७ ॥ ( १३ ) ॥

इति वैयासिक्यां शारीरकमीमांसायां द्वितीयाध्यायस्य प्रथमः पादः समाप्तः ॥

चेतनं ब्रह्म जगतः कारणं प्रकृतिश्चेत्यस्मिन्नवधारिते वेदार्थे परैरुपक्षिप्तानिविलक्षणत्वादीन्दोषान्पर्यहार्षीदाचार्यः ॥ इदानीं परपक्षप्रतिषेधप्रधानं प्रकरणं प्रारिप्समानस्स्वपक्षपरिग्रहप्रधानं प्रकरणमुपसंहरति ॥ यस्मादस्मिन्ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्वे कारणधर्मा उपपद्यन्ते सर्वज्ञं सर्वशक्ति—

रत्नप्रभा ।

[ छां० ६ । २ । १ ] इत्यवधारणमुपक्रमः । तस्मान्निरवद्ये ब्रह्मणि समन्वयाविरोध इति सिद्धम् ॥ ॥ ३६ ॥ ( १२ ) ॥ **सर्वधर्मोपपत्तेश्च** । निर्गुणस्य ब्रह्मणो जगदुपादानत्वाद्वेदान्तसमन्वयो विषयः स किं निर्गुणं तन्नोपादानं यथा रूपमिति न्यायेन विरुध्यते न वेति सन्देहे भगवतीश्वरस्य विषमसृष्टिनिमित्तत्वम् । न प्रयोजकस्य कर्मणः सत्त्वात् नोपादानत्वम् । तद्व्यापकस्य सगुणत्वस्याभावादिति प्रत्युदाहरणेन प्राप्ते सिद्धान्तसूत्रार्थमाह—**चेतनमिति** ॥ विवर्तोपादानत्वं निर्गुणस्याप्यविरुद्धम् । अज्ञातत्वस्य अध्यासाधिष्ठानत्वप्रयोजकस्य सत्त्वात् । सगुणत्वं त्वव्यापकम् । शब्दादिनिर्गुणेषु नित्यत्वादिभ्रमदर्शनादिति भावः । **यद्यपि** सर्वज्ञत्वं सर्वशक्तित्वं च लोके कारणधर्मत्वेनाप्रसिद्धम् । **तथापि** यो यस्य कर्ता स तस्य सर्वस्य ज्ञाता शक्तश्चेति प्रसिद्धम् । ईश्वरस्यापि सर्वकर्तृत्वश्रवणात् प्रसिद्ध्यनुसारेणार्थान्निरतिशयसर्वज्ञत्वं, सर्वशक्तित्वं च,—सिध्यतीत्यभिसन्धायाह—**सर्वज्ञं सर्वशक्तीति** ॥

भामती ।

तान्यपाकरोतीति सर्वमवदातम् ॥ ३६ ॥ ( १२ ) ॥ **सर्वधर्मोपपत्तेश्च** । अत्र **सर्वज्ञमिति** दर्शने सर्वस्य चेतनाधिष्ठितस्यैव लोके प्रवृत्तिरिति लोकानुसारो दर्शितः । **सर्वशक्तीति** । सर्वस्य जगत उपादानकारण

आनन्दगिरीय-न्यायनिर्णयः ।

दौर्गानिकी समभिमाह—**पुराणे चेति** ॥ ३६ ॥ ( १२ ) ॥ पूर्वाधिकरणे कर्मवशादीश्वरस्य विषमसृष्टिहेतुत्वमुक्तं तथाऽपि सत्त्व सगुणत्वमुपादानत्वान्मृदादिवदित्याशङ्क्याऽऽह—**सर्वधर्मेति** । निर्गुणस्य ब्रह्मणो जगदुपादानत्वादिसमन्वयो विषयः, स किं यन्निर्गुणं न तदुपादानं यथा गन्ध इति न्यायेन विरुध्यते न वेति पूर्वोक्ते सन्देहे पूर्वपक्षं सिद्धान्तमाह—**चेतनमित्यादिना** । निर्गुणस्य सत्त्वदुपादानत्वायोगात्सगुणत्वे मृदादिवदुपादानत्वेन प्राप्ते विवर्ताधिष्ठानत्वस्योपादानत्वात्तस्य च निर्गुणेऽपि जायादावविरोधादविरुद्धं निर्गुणस्यापि ब्रह्मणो जगदुपादानत्वमिति राद्धान्तमभिसन्धाय सूत्राक्षराणि व्याचष्टे—**यस्मादिति** । पादादिसङ्गतिश्चतुर्थ्य पूर्व च पूर्वोत्तरपक्षयोर्यथापूर्वमसरोधम् । यद्यपि लोके सर्वज्ञत्वं कारणस्य धर्मो न दृष्टो तथाऽपि कुलालादौ मृदादिप्रेरकत्वदर्शनात्सर्वस्यापि निरतिशये तेन भवितव्यं तस्य सर्वप्रेरकत्वस्य श्रौतत्वादर्थादेव सर्वज्ञत्वमविशिष्टमित्याह—**सर्वज्ञमिति** । एवमपि सर्वशक्तित्वमपि शास्त्रगुरुप्रसादधिगम्यमिति मत्वाऽऽह—**सर्वशक्तीति** । तेनोपादानत्वमुपपादितं सर्व-

महामायं च ब्रह्मेति ॥ तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमिति ॥ ॥ २ ॥ १ ॥ ३७ ॥ इति सर्वधर्मोपपत्त्यधिकरणम् ॥ १३ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणपरमहंसपरिव्राजकाचार्यश्रीमद्गोविन्दपूज्यपादशिष्यश्रीमच्छङ्करभगवत्पादकृतौ श्रीमच्छारीरकमीमांसादर्शनभाष्ये सांख्ययोगकाणादादिभिस्तत्तर्कैश्च विरोधपरिहारो नाम द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥

---

रत्नप्रभा ।

महामायमिति । कर्तृत्वोपादानत्वकथने सर्वशङ्काप्रक्षालनायोक्तम् । तस्मादौपनिषदसिद्धान्ते न कश्चिद्दोष इति सिद्धम् ॥ ३७ ॥ २ ॥ १ ॥ ( १३ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्गोपालसरस्वतीपूज्यपादशिष्यश्रीगोविन्दानन्दभगवत्पादकृतौ शारीरकमीमांसादर्शनभाष्यव्याख्यायां ( भाष्य ) रत्नप्रभायां द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥

भामती ।

निमित्तकारणं चेत्युपपादितम् । महामायमिति । सर्वानुपपत्तिशङ्का प्रगल्भा । तस्माज्जगत्कारणं ब्रह्मेति सिद्धम् ॥ ३७ ॥ ( १३ ) ॥

इति श्रीवाचस्पतिमिश्रविरचिते भगवत्पादशारीरकभाष्यविभागे भामत्यां द्वितीयस्याध्यायस्य प्रथमः पादः ॥ २ ॥ १ ॥

आनन्दगिरीय–न्यायनिर्णयः ।

ब्रह्मत्वेन निमित्तत्वमिति भेदः । निर्गुणत्वादिप्रयुक्तसर्वानुपपत्तिशङ्कोपशान्तये विशिनष्टि–महामायं चेति । एतेन ब्रह्मण्यनवच्छिन्न मायाविद्यादिशक्तिमनिर्वाच्यमज्ञानं कारणत्वादिसर्वव्यवहारनिर्वाहकमस्तीत्युक्तम् । यस्मादित्यस्यापेक्षितं पूरयन्नाद्यार्थमुपसंहरति–तस्मादिति । स्मृतिन्यायविरोधः समन्वयस्य नास्तीति सिद्धमिति वक्तुमितिशब्दः ॥ ३७ ॥ ( १३ ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दगिरि (ज्ञान) विरचिते श्रीमच्छारीरकभाष्यन्यायनिर्णये द्वितीयस्याध्यायस्य प्रथमः पादः समाप्तः ॥ २ ॥ १ ॥

॥ इति द्वितीयाध्यायस्य सांख्ययोगकाणादादिभिस्तर्कैश्च विरोधपरिहाराख्यः प्रथमः पादः ॥

---

# द्वितीयाध्याये द्वितीयः पादः २.



## रचनानुपपत्तेश्च नानुमानम् ॥ २ ॥ २ ॥ १ ॥ ( १ ) ॥

**यद्यपीदं वेदान्तवाक्यानामैदम्पर्यं निरूपयितुं शास्त्रं प्रवृत्तं न तर्कशास्त्रवत्केवलाभिर्युक्तिभिः कंचित्सिद्धान्तं साधयितुं दूषयितुं वा प्रवृत्तम् । तथापि वेदान्तवाक्यानि व्याचक्षाणैः सम्यग्दर्शनप्रतिपक्षभूतानि सांख्यादिदर्शनानि निराकरणीयानीति तदर्थः परः पादः प्रवर्तते ॥ वेदान्तार्थनिर्णयस्य च सम्यग्दर्शनार्थत्वात् । तन्निर्णयेन स्वपक्षस्थापनं**

रत्नप्रभा ।

ॐ ब्रह्मणे नमः । सांख्यतार्किकबौद्धाश्च जैनाः पाशुपतादयः । यस्य तत्त्वं न जानन्ति तं वन्दे रघुपुङ्गवम् ॥ १ ॥ ब्रह्मणि सर्वधर्मोपपत्तिवत् प्रधानेऽपि तदुपपत्तिमाशङ्क्य निराचष्टे—**रचनानुपपत्तेश्च नानुमानम्** ॥ [ २ । २ । १ ] इति । ननु मुमुक्षुणा वाक्यार्थनिर्णयप्रतिबन्धनिरासाय वेदान्तानां तात्पर्यं निश्चेतुमिदं शास्त्रमारब्धम् । तच्च निर्दोषतया निश्चितम् । ततः परपक्षनिरासात्मकोऽयं पादोऽस्मिञ्छास्त्रे न सङ्गतः । तन्निरासस्य मुमुक्ष्वनपेक्षितत्वादित्याक्षिपति—**यद्यपीति** ॥ परपक्षनिराकरणं विना स्वपक्षस्थैर्यायोगात्, तत् कर्तव्यमित्याह—**तथापीति** ॥ तर्हि स्वपक्षस्थापनात् प्रागेव परपक्षप्रत्याख्यानं कार्यमित्यत आह—**वेदान्तार्थेति** ॥ वेदान्ततात्पर्यनिर्णयस्य फलवज्ज्ञानकरणान्तर्भावादभ्य-

भामती ।

**रचनानुपपत्तेश्च नानुमानम्** । स्यादेतत् । इह हि पादे स्वतन्त्रा वेदनिरपेक्षाः प्रधानादिसिद्धिविषयाः सांख्यादियुक्तयो निराक्रियन्ते । तदयुक्तमसङ्गतत्वात् । न हीदं शास्त्रमुत्प्रेक्षातर्कशास्त्रं प्रवृत्तमपि तु वेदान्तवाक्यानि ब्रह्मपराणीति पूर्वपक्षोत्तरपक्षाभ्यां विनिश्चेतुम् । तत्र कः प्रसङ्गः शुष्कतर्कैः स्वतन्त्रयुक्तिनिराकरणस्येत्यत आह—**यद्यपीदं वेदान्तवाक्यानामिति** । न हि वेदान्तवाक्यानि निर्णेतव्यानीति निर्णीयन्ते, किंतु मोक्षमाणानां तत्त्वज्ञानोत्पादनाय । यथा च वेदान्तवाक्येभ्यो जगदुपादानं ब्रह्मावगम्यते, एवं सांख्याद्यनुमानेभ्यः प्रधानाद्यचेतनं जगदुपादानमवगम्यते । न चैतद्द्वयं चेतनोपादानमचेतनोपादानं चेति समुच्चेतुं शक्यं, विरोधात् । न च व्यवस्थितं वस्तुनि विकल्पो युज्यते । न चागमविरोधात्तद्विषयतयानुमानमेव नोदीयत इति साम्प्रतम् । सर्वज्ञप्रणीततया सांख्याद्यागमस्य वेदागमतुल्यत्वात् तद्विरोधिनोऽनुमानस्य प्रतिहतिमिह तुल्यतयाऽनाश्वासात् । तस्माद्विरोधात् ब्रह्मणि समन्वयो वेदान्तानां शिथिलीभवतीति न तत्त्वज्ञानं सेद्धुमर्हतीति । न च तत्त्वज्ञानान्न मोक्ष इति स्वतन्त्राणामप्यनुमानानामाभासीकरणमिह शास्त्रे सङ्गतमेवेति । यद्येवं ततः परपक्षानुमाननिरास एव प्रथमं कस्मान्न कृत इत्यत आह—**वेदान्तार्थनिर्णयस्य चेति** । ननु वीतरागकथायां तत्त्वनिर्णयमात्रमुपयुज्यते न पुनः परपक्षाभि-

आनन्दगिरीय–न्यायनिर्णयः ।

ब्रह्मणि कारणे सर्वज्ञत्वादिषूक्तेषु प्रधानेऽपि तदुपपत्तिमाशङ्क्योक्तम्—**रचनानुपपत्तेश्चेति** । पूर्वपादेन समन्वयं वादिभिरुद्भाविता विरोधादयो दोषा निरस्ताः । सम्प्रति परपक्षाणां भ्रान्तिमूलत्वं पादान्तरमारभ्यते । ननु तर्कशास्त्रवदस्य शास्त्रस्य तर्कप्रधानत्वाभावाद्वेदान्तवाक्यप्रधानत्वेन ब्रह्मणि तात्पर्यनिर्णयार्थत्वात् तदपेक्षितत्वात् समन्वयाध्याये सिद्धत्वात् स्वपक्षस्थापनमात्रेण कृतार्थत्वात् किमु नेनोपयुज्यते तन्निरसनेन पादेनेति तत्राऽऽह—**यद्यपीति** । परपक्षप्रतिक्षेपमन्तरेण स्वपक्षावधारणायोगात्तन्निराकरणमपि प्रकृतोपयोगीति पादारम्भं समर्थयते—**तथाऽपीति** । स्वपक्षे निर्धारयितुं परपक्षो निराकर्तव्यश्चेत्तर्हि प्रथमं किमिति न कृतमित्याशङ्क्याऽऽह—**वेदान्तेति** । परपक्षप्रतिषेधस्यापि तदर्थ-

न्यप्युदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते ॥ तेषां यद्व्याख्यानं तद्व्याख्यानाभासं न सम्यग्व्याख्यानमित्येतावत्पूर्वत्र कृतम् ॥ इह तु वाक्यनिरपेक्षस्स्वतन्त्रस्तद्युक्तिप्रतिषेधः क्रियत इत्येष विशेषः ॥ तत्र सांख्या मन्यन्ते—यथा-घटशरावादयो भेदा मृदात्मतयाऽन्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्व एव बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्मतयाऽन्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्वका भवितुमर्हन्ति ॥ यत्तत्सुखदुःखमोहात्मकसामान्यं तत्त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं

रत्नप्रभा ।

प्रधानमचेतनं जगदुपादानमिति सांख्यसिद्धान्तोऽत्र विषयः । स किं प्रमाणमूलो, भ्रान्तिमूलो वेति सन्देहे "सर्वधर्मोपपत्तेश्च" इत्युक्तधर्माणां प्रधाने सम्भवाच्चदेवोपादानमित्याक्षेपसंगत्या प्रमाणमूलत्वं दर्शयन्पूर्वपक्षमाह—तत्र सांख्या इति ॥ स्वसिद्धान्तज्ञानस्य परमतनिरास प्रत्युपजीव्यत्वात्पादयोः संगतिः । परमतनिरासात्मकत्वात्सर्वेषामधिकरणानामेतत्पादसंगतिः । पूर्वपक्षे प्रमाणमूलमतविरोधादुक्तश्रुत्यर्थसमन्वयासिद्धिः फलम् । सिद्धान्ते तत्सिद्धिरिति आपाद द्रष्टव्यम् । श्रौतसमन्वयपदार्थत्वादस्य पादस्य श्रुतिसङ्गतिरिति विवेकः । भिद्यन्त इति भेदाः विकाराः । ये विकारा येनान्वितास्ते तत्प्रकृतिका इति व्याप्तिमाह—यथेति ॥ सर्वं कार्यं, सुखदुःखमोहात्मकवस्तुप्रकृतिकं, तदन्वितत्वाद्, घटादिवदित्यनुमानमाह—तथेति ॥ किमर्थं प्रधानं परिणमते तत्राह—चेतनस्येति ॥

भामती ।

रीति । तत्र सांख्या इति । यानि हि येन रूपेण स्थौल्यादा च सौक्ष्म्यात्समन्वीयन्ते तानि तत्कारणानि दृष्टानि, यथा घटादयो रुचकादयश्च स्थौल्यादा च सौक्ष्म्यान्मृत्सुवर्णान्वितास्तत्कारणाः, तथा चेदं बाह्यमाध्यात्मिकं च भावजातं सुखदुःखमोहात्मनान्वितमुपलभ्यते, तस्मात्तदपि सुखदुःखमोहात्मसामान्यकारणकं भवितुमर्हति । तत्र जगत्कारणस्य येयं सुखात्मना तत्सत्त्वं, या दुःखात्मना तद्रजः, या च मोहात्मना तत्तम इति त्रैगुण्यकारणसिद्धिः । तथाहि—प्रत्येकं भावास्त्रैगुण्यवन्तोऽनुभूयन्ते । यथा मैत्रदारेषु सत्यवत्यां मैत्रस्य सुखं, तत् कस्य हेतोः, तं प्रति सत्त्वगुणसमुद्भवात् । तत्सपत्नीनां च दुःखं, तत्कस्य हेतोः, ताः प्रत्यस्या रजोगुणसमुद्भवात् । चैत्रस्य तु त्वैणस्य तामविन्दतो

आनन्दगिरीय-न्यायनिर्णयः ।

सानन्तरं स्वतन्त्राणां परकीययुक्तीनां स्वतन्त्राभिरेव युक्तिभिः स्वपक्षं स्थापयितुं निरसनं कार्यमिति पादानन्तर्यं वददिति पादसङ्गतिरुक्ता । सांख्ययुक्तिनिरासस्य समन्वये तद्विरोधनिरसनद्वारा तच्छेषत्वाद्ध्यायार्थत्वादस्याधिकरणस्य पादादिसङ्गतयः । अत्र पूर्वपक्षे सांख्ययुक्तिविरोधादसिद्धिः समन्वयस्य फलमिति सिद्धान्ते तु तदविरोधात्तत्सिद्धिः । तत्र प्रधानमचेतनं जगदुपादानमिति सांख्यसिद्धान्तो विषयः स किं प्रमाणमूलो भ्रान्तिमूलो वेति विप्रतिपत्तौ सन्देहे पूर्वपक्षमाह—तत्रेति । सांख्यीयमनुमानं वक्तुं व्याप्तिमाह—यथेति । ये यत्स्वभावान्विताम्ते तत्स्वभाववस्तुप्रकृतिकाः, यथा घटादयो मृत्स्वभावान्विताम्तत्प्रकृतिका इत्यर्थः । पक्षधर्मता हेतोर्दर्शयन्ननुमानमाह—तथेति । सर्वं कार्यं सुखदुःखमोहात्मकवस्तुप्रकृतिकं तत्स्वभावान्वितत्वाद्घटादिवदित्यर्थः । ननु सर्वस्य कार्यस्योपादानं सुखदुःखमोहात्मकं किंचिद्भविष्यति तथाऽपि कथं प्रधानसिद्धिरित्याशङ्क्याह—यत्तदिति । सुखदुःखमोहात्मनैव सत्त्वरजस्तमोरूपेणेति मन्वानो विशिनष्टि—तत्त्रिगुणमिति । कार्यस्याचेतनत्वं दृष्ट्वा तत्कारणमपि तादृगेवानुमेयमित्याह—मृद्वदिति । किमर्थं तत्परिणमते तत्राह—चेतनस्येति । अर्थशब्दो भोगापवर्गार्थः । अचेतनस्य प्रयोजनपरिज्ञानाभावादप्रवृत्तिः ।

